पञ्चप्रक्रिया

गोचरातीते षष्ठ्यादिसंभवोऽस्ति, येन मुख्या वृत्तिर्घटेत । तस्माद् गौणी लक्षणा वा शब्दस्य प्रत्यगात्मनि वृत्तिः ।

"प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात्[1]"

इति गुणयोगादहमादिशब्दस्य गौणी प्रत्यगात्मनि वृत्तिरङ्गीकृतैव । लक्षणापि जहल्लक्षणा अजहल्लक्षणा च नेष्यते; जहदजहल्लक्षणा त्वङ्गीक्रियते[2] पारोक्ष्य-

पञ्चप्रक्रियाटीका

प्रतोचिशब्दस्य मुख्यवृत्त्यसंभवे वृत्तिद्वयं परिशेषादेषितव्यमित्याह—तस्मादिति ॥ प्रत्यगात्मन्यविषये वृत्त्यन्तरमपि नोपपद्यते; तथापि साक्षाद्विषयत्वप्राप्त्यभावादविरुद्धं वृत्त्यन्तरमित्यभिसन्धाय गुणवृत्तौ वृद्धसंमतिमाह–प्रत्यक्त्वादिति ॥ अस्ति हि देहाद्यपेक्षया प्रत्यगात्मवत् अहङ्कारेऽपि प्रत्यक्त्वम्, आत्मातिरिक्ततदभ्यन्तरवस्त्वन्तराभावात् । अस्ति चात्मवदहङ्कारे द्विविधेन्द्रियगोचरत्वलक्षणमतिसूक्ष्मत्वम् । आत्मदृष्टिः आत्मस्वरूपं तदनुशीलनं तदनुकारित्वं तच्छायत्वमहङ्कारस्य स्वीक्रियते । अहङ्कारो हि चैतन्यानुकारी चैतन्यच्छायापत्त्या चेतनवदुपलभ्यते । तस्मादहमिति वृत्तिव्यतिरिक्ता वृत्तीः शब्दान्तराणि च परित्यज्य अहमिति वृत्तिं गृहीत्वा तद्वाचकेन तत्साक्षी प्रत्यगात्मा उपलभ्यते, मुख्यार्थनिष्ठप्रत्यक्त्वादिप्रदर्शितगुणयोगादित्यर्थः । ननूदाहृतवार्तिकस्य लक्षणावृत्तिविषयत्वेन चरितार्थत्वान्न गुणवृत्तौ पर्यवसानमित्याशङ्क्य तात्पर्यमाह–गुणयोगादिति ॥ प्रत्यगात्मनि गुणवृत्तिमहमादिशब्दस्य दर्शयित्वा लक्षणावृत्तिं दर्शयन् अशेषलक्षणाप्रवृत्तिं परिहृत्य विवक्षितां लक्षणामवतारयति—लक्षणापीति ॥ जहदजहल्लक्षणाङ्गीकारेणैवमाह[कारे कारणमाह]—पारोक्ष्येति ॥

पञ्चप्रक्रियाव्याख्या

शेष्याद्वृत्तिद्वयं तत्राङ्गीकरणीयमिति निगमयति–तस्मादिति ॥ क्रौर्यशौर्यादिसिंहगुणयुक्तदेवदत्त इवागुणे प्रतीचि कथं गौणी वृत्तिरित्यत आह–प्रत्यक्त्वेति ॥ अस्ति हि देहाद्यपेक्षया अहंकारस्य[4] प्रत्यक्त्वमुभयविधेन्द्रियगोचरत्वरूपमतिसूक्ष्मत्वं च; यदात्मदृष्ट्यनुशीलनमात्मस्वरूपचैतन्यच्छायत्वं तदपि तस्यास्ति । अतस्तद्वाचकस्य तद्गुणयोगात् प्रत्यगात्मनि वृत्तिः संभवतीति भावः । लक्षणाद्वयं[3] विहाय जहदजहल्लक्षणाङ्गीकारे कारणमाह—पारोक्ष्येति ॥ पारोक्ष्यशबले सद्रूपचैतन्ये गृहीत-

१. G. प्रत्यक्षात्
२. TM. क्रियते
३. G. लक्षणात्
४. G omits अहंकारस्य

## पञ्चप्रक्रिया

सद्वितीयशबले [1]व्युत्पन्नयोः तत्त्वंपदयोः [2]एकांशपरित्यागेनांशान्तरे[3] वृत्ति-संभवात् 'सोऽयम्' इत्यादिवाक्यस्थपदयोरिव। तस्माज् जहदजहल्लक्षणया

## पञ्चप्रक्रियाटीका

महावाक्यगतं तत्पदं पारोक्ष्यशबले ब्रह्मचैतन्ये व्युत्पन्नम्। तत्रैव स्थितत्वंपदं च सद्विती-यशबले प्रत्यक्चैतन्ये गृहीतशक्तिकम्। तयोरेव पदयोः वाच्ययन[वाच्यौ यौ]शबला-र्थौ तयोरेकैकस्यांशस्य पारोक्ष्यस्य सद्वितीयत्वस्य परित्यागेन परिशिष्टेऽशान्तरे परि-पूर्णे प्रत्यक्चैतन्ये सदेकताने पदद्वयस्य वृत्तिसंभवाद् युक्ता जहदजहल्लक्षणेत्यर्थः। न चेयमप्रसिद्धा, लोके प्रसिद्धत्वात् इति प्रागुक्तमेवोदाहरणमाह–सोऽयमित्यादीति॥ तत्र हि तद्देशकालविशिष्टे सशब्दस्य एतद्देशकालविशिष्टे च अयंशब्दस्य व्युत्पन्नत्वात् तद्देशकालयोश्च परित्यागेन देवदत्तमात्रे पदद्वयस्य वर्तनात् इष्टा जहदजहल्लक्षणा। न हि तत्र विशिष्टवैशिष्ट्यमिष्टं शङ्क्यम्, अपर्यायेण विरुद्धोभयविशेषणवत्त्वस्यैकत्रा-संभवात्; न विशिष्टलक्षितयोरेकत्वम्; देवदत्तस्वरूपमात्रस्य भेदाभावोपलक्षितस्य बुभुत्सितत्वात्। तथा तत्त्वमसिवाक्ये तत्त्वंपदयोरखण्डार्थवृत्तित्वं वक्तव्यमित्यर्थः। लक्षणाविशेषाङ्गीकारे फलितमाह — तस्मादिति॥ जहल्लक्षणाया वा अजहल्लक्ष-णाया वा किमिति प्रत्यगात्मा बोध्यो न भवति इत्याशङ्क्य तयोः सोपाधिकविषय-

## पञ्चप्रक्रियाव्याख्या

सामर्थ्यं तत्पदम्; सद्द्वितीयशबले प्रत्यक्चैतन्ये निर्ज्ञातशक्तिकं त्वंपदम्। तद्वाच्ययोः शबलार्थयोः पारोक्ष्यांशस्य सद्द्वितीयांशस्य च परित्यागेनानन्दैकरसे परिपूर्णे प्रत्यगात्मे तयोः वृत्तेः जहदजह-ल्लक्षणा संभवतीत्यर्थः। तत्रोदाहरणमाह—सोऽयमिति॥ तत्र तदे[4]तद्देशकालशबलदेवदत्त-वाचिनोः सोऽयंपदयोः जहदजहल्लक्षणया तदेतद्देशकालपरित्यागेन देवदत्तमात्रे वृत्तिरिति भावः। फलितमाह—तस्मादिति॥ यथा "गायत्री वा इदं सर्वं भूतम्" इत्यत्र छन्दोविशेष-वाचिनो गायत्रीशब्दस्य तदपरित्यागेन छन्दोनुषक्तकारणात्मकब्रह्मणि [5]अजहल्लक्षणा वृत्तिः;

१. TM. प्युत्पन्नयोः
२. TM. एकात्मभाग
३. G. भज्ञान्तरे
४. TM. तदेकदेश
५. TM omits अजह...ब्रह्मणि

पञ्चप्रक्रिया

प्रत्यगात्मा बोध्यते; न गायत्रीवैश्वानरादिशब्दवत् स्वार्थापरित्यागेनाजहल्लक्षणया; नापि "यजमानः प्रस्तरः" "यजमान एककपालः" इत्यादिवत् स्वार्थपरित्यागेन जहल्लक्षणयेति सिद्धम् ॥

पञ्चप्रक्रियाटीका

त्वात् निरुपाधिके प्रतीचि यथोक्तवल्लक्षणापेक्षणीयेत्याह — न गायत्रीति ॥ "गायत्री वा इदं सर्वं भूतम्" इत्यत्र गायत्रीशब्दस्य छन्दोविशेषवाचिनः तदपरित्यागेन तदनुगते कारणभूते ब्रह्मणि लक्षणा स्वीक्रियते। "वैश्वानरमात्मानं संप्रत्यध्येषि" इत्यत्र वैश्वानरशब्दस्य जाठराग्न्यादिगोचरस्य तदपरित्यागेन तदसङ्गते ब्रह्मणि लक्षणाङ्गीक्रियते। आदिशब्देन प्राणाकाशादिशब्दा गृह्यन्ते। न तथा निरुपाधिके प्रत्यगात्मनि अजहल्लक्षणावकाशोऽस्ति। अहमादिशब्दस्य वाच्यार्थमात्रमङ्गीकृत्य प्रत्यगात्मनि प्रवृत्तौ तदीयनिरुपाधिकत्वा...[कभावापा]नात् "यजमानः प्रस्तरः" इत्यादौ यजमानशब्दस्य चेतनवाचिनः स्वार्थसन्त्यागेन प्रस्तरादौ जहल्लक्षणाभ्युपगम्यते। प्रस्तरशब्देन जुह्वाधारो दर्भमुष्टिविशेषो निरुच्यते। एवमस्मिन् [एवमेकस्मिन्] कपाले अर्पयितव्यो द्यावापृथिव्यादिशब्दितपुरोडाशोऽत्रैककपालशब्देनाभिलप्यते। न तथा तत्त्वंशब्दयोः स्वार्थमात्रं त्यक्त्वा चैतन्ये वृत्तिर्युक्ता, तस्याप्रत्यक्त्वादिप्रसङ्गात्। अत्र च आदिशब्देन "आदित्यो यूपः" इत्यादि संगृहीतमित्यर्थः। एवं जहदजहल्लक्षणायाः प्रत्यग्भूतं ब्रह्म बोध्यमित्युपसंहरति—इति सिद्धमिति ॥

पञ्चप्रक्रियाव्याख्या

यथा वा "वैश्वानरमात्मानं संप्रत्यध्येषि" इत्यत्र जाठरे[र]जातवेदोवाचिनो वैश्वानरशब्दस्य तदनुगते ब्रह्मणि अजहल्लक्षणाश्रीयते न तथा निरुपाधिके प्रत्यगात्मनि सा संभवति। यथा "यजमानः प्रस्तरः" "यजमान एककपालः" इत्यादौ चेतनवाचिनो यजमानशब्दस्य जुह्वाधारभूतदर्भमुष्टिविशेषे प्रस्तरनामके तथा एकस्मिन् कपाले अर्पयितव्ये पुरोडाशे चैककपालाऽभिहिते[२] जहल्लक्षणया वृत्तिः न तथात्र जहल्लक्षणासंभवोऽपीत्यर्थः ॥

१. TM adds न    २. TM. भिधीयते

### पञ्चप्रक्रिया

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहं-
शब्दोऽहंकारवाची भवति तु जहती लक्षणा तत्र पक्षे ।
नौरेषा रौति लोहं दहति विषधरो रज्जुरग्रे तवासा-
वित्यत्रेवात्मवस्तुन्यपि न खलु तदा कश्चिदप्यस्ति दोषः ॥

इदमेव वृत्तित्रयमङ्गीकृत्य "समर्थः पदविधिः" इत्यत्र सूत्रे जहत्स्वार्था-जहत्स्वार्था जहदजहत्स्वार्थेति भाषापदप्रक्षेपेण त्रैविध्यवृद्धाः लक्षणाविभागं

### पञ्चप्रक्रियाटीका

पारोक्ष्यशबलं ब्रह्मशब्दवाच्यं सद्द्वितीयत्वशबलं प्रत्यक्चैतन्यमहंशब्दवाच्य-मिति पक्षेण नास्ति जहल्लक्षणेत्युक्तम् । इदानीं पक्षान्तरमाह —साभासेति ॥ यदि "अहं ब्रह्म" इत्यत्र ब्रह्मशब्दः साभासमज्ञानमभिसन्धत्ते, अहंशब्दश्च अहंकारं साभासमभिधाति, तदा पदद्वयस्य भवत्येव जहल्लक्षणा इति । अत्र उदाहरणं निदर्श-यति–**नौरित्यादिना** ॥ तस्मिन् पक्षे प्रतीचि जहल्लक्षणाङ्गीकारे दोषराहित्यं हेतुमाह— **न खल्विति** ॥ उक्ते शब्दस्य वृत्तित्रये लक्षणाविभागे वैयाकरणसंमतिमाह–**इदमेवेति** ॥ पदानां पूर्वापरीभूतानां विधिः विधानमितरेतरसंबन्धः समासः । स च समर्थः योग्यः संभवति । समर्थं हि पदं पदान्तरेण समर्थेनैव संबध्यमानं समस्यते । योग्य-त्वाभावे समासस्याभासत्वादिति सूत्रार्थः । तत्र च सूत्रे प्रागुक्तं वृत्तित्रयमुपेत्य जहत्स्वार्थेति भाषाविशेषसहितं पदं प्रक्षिप्य तेन लक्षणायामवान्तरविभागं वेदार्थ-

### पञ्चप्रक्रियाव्याख्या

पारोक्ष्यादिशबलं ब्रह्मादिशब्दलक्ष्यमित्यस्मिन् पक्षे जहल्लक्षणा च न संभवतीत्यभाणि । संप्रति साभासमज्ञानं ब्रह्मशब्दाभिधेयं साभासश्चाहंकारोऽहंशब्दवाच्यः इत्यङ्गीकारे जहल्लक्षणा संभवतीत्याह—**साभासेति** ॥ तत्र पक्षे आत्मवस्तुन्यपि जहती लक्षणा इत्यत्रेव भवत्येवेति संबन्धः । पुरोदीरितवृत्तित्रये लक्षणाविभागे च पातञ्जलभाष्यसंमतिमाह—**इदमेवेति** ॥ **भाषापद-प्रक्षेपेणेति** ॥ एषोऽर्थः—साङ्केतिकपदप्रयोगेणेति । नन्वात्मनि लक्षणास्वीकरणे विषयत्वमापतेत्;

१. TM. त्रैविध्यं वृद्धाः २. G. इत्यनेनैव

### पञ्चप्रक्रिया

चक्रुः। न चैवं मन्तव्यम्—लक्षणयाप्यात्मनो बोध्यत्वे कर्मत्वप्रसङ्ग इति, अ[अविद्या]ध्यारोपितातद्धर्मविनिवर्तकत्वात् शास्त्रस्य। शास्त्रं हि प्रत्यगात्मनि अविद्याध्यारोपितमतद्धर्मं निवर्तयत्येव केवलम्, न तु तं कर्मीकरोति; अतः "यतो वाचो निवर्तन्ते" इत्यादिविरोधोऽपि नास्त्येव। औपनिषदत्वविशेषणमपि प्रत्यगात्मनः शास्त्रस्य तद्विषयाविद्यानिवर्तकत्वेन कर्मत्वाभावेऽप्युपपद्यत एव। तस्मान्मुख्यवृत्तिपरिहारेण लक्षणया वा गुणवृत्त्या वा यथाभागं प्रत्यगात्मनि

### पञ्चप्रक्रियाटीका

विदोऽङ्गीकृतवन्त इत्यर्थः। वृत्तित्रयमुक्त्वा लक्षणावृत्तिरात्मन्यङ्गीकृता; सा चायुक्ता प्रत्यगात्मनोऽविषयत्वात्, लक्षणाविषयत्वस्यापि वक्तुमशक्यत्वादित्याशङ्क्याह — न चेति॥ कुतो न मन्तव्यमिति चेत् तत्राह—अविद्येति॥ तदेव समन्वयाधिकरण-न्यायेन साधयति —शास्त्रं हीति॥ एवकारस्त्वयोगव्यावृत्त्यर्थः। केवलशब्दस्य व्यावर्त्यं दर्शयति—न त्विति॥ आत्मनः शास्त्रप्रतिपाद्यत्वे वाङ्मनसागोचरत्व-श्रुतिविरोधः स्यात् इत्याशङ्क्य कर्मत्वाभावान्नैवमित्याह— अत इति॥ शास्त्रं चेदा-त्मानं न कर्मीकरोति, कथं तर्हि तद्धितश्रुतिः इत्याशङ्क्याह —औपनिषदत्वेति॥ मुख्यां वृत्तिं विहाय वृत्तिद्वयमात्मन्यङ्गीकृतमुपसंहरति—तस्मादिति॥ पूर्वोक्तगुण-विभागमनुसृत्य गुणवृत्त्या वा, प्रागुक्तविभागमङ्गीकृत्य लक्षणया वा प्रत्यगात्मनि प्रतिपाद्यमाने शास्त्रप्रतिपाद्यत्वविषयत्वयोरन्यतरस्यापि न विरोधोऽस्ति इत्यर्थः। आत्मन्याश्रितवृत्तिद्वयस्य सहकारित्वेन पदार्थपरिशोधनं विवक्षन् मुमुक्षुं शिक्षयति-लक्षणेति॥

### पञ्चप्रक्रियाव्याख्या

अतः सापि न घटां प्राञ्चतीत्याशङ्क्य प्रत्याचष्टे—न चेति॥ किं मन्तव्यमित्यत्राह — अविद्ययेति[द्येति]॥ एतदेव साधयति—शास्त्रं हीति॥ आत्मनः शास्त्रविषयत्वाभावे चोद्यान्तर-मपि निराकृतमित्याह—अत इति॥ यद्यात्मा शास्त्राविषयः तर्हि "तं त्वौपनिषदम्" इति विशेषणमनुपपन्नमित्यत्राह — औपनिषदत्वेति॥ आत्मन्यङ्गीकृतं वृत्तित्रयं निगमयति — तस्मादिति॥ अविरोधफलं दर्शयति—इति लक्षणेति॥

पञ्चप्रक्रिया

प्रतिपाद्यमाने न कश्चिद्विरोध इति लक्षणागुणवृत्तिशरणेन मुमुक्षुणा कृतान्वयव्यतिरेकेण भाव्यम्—इति ॥

बाह्याभ्यन्तरवस्तूनि यन्महिम्ना चकासति ।
तस्यै कूटस्थनित्यायै महत्यै संविदे नमः ॥

श्रीमद्देवेश्वराङ्घ्रिस्फुटकमलरजःपातसंपर्कपूतः
सर्वज्ञात्मा समस्तश्रुतिपथकुशलः शब्दवृत्तिप्रभेदम् ।
व्याचख्यावेतमेवं यतिजनमनसि ज्ञानवैमल्यसिद्ध्यै
शब्दज्ञानं निदानं भवति हि जगतः श्रेयसः प्रेयसश्च ॥

इति शब्दवृत्तिविवेकः

पञ्चप्रक्रियाटीका

शब्दवृत्तिविवेकविषयप्रकरणारम्भवत्तत्परिसमाप्तावपि परदेवतां प्रणमन् प्रकरणतात्पर्यं संगृह्णाति—बाह्याभ्यन्तरेति ॥ अन्तर्बहिर्भागेनावस्थितानि समस्तान्येवानात्मवस्तूनि चिद्रात्मप्रसादादेव भानमनुभवन्ति "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । सा चेयं प्रत्यग्भूता संवित् कूटस्थनित्याख्येया, परिणामित्वे हि मृदादिवत् अनात्मत्वसावयवत्वानित्यत्वादिप्रसङ्गात्; सा च त्रिविधपरिच्छेदविरहिणी परिगृह्यते; परिच्छिन्नत्वे "यावद्विकारं तु विभागो लोकवत्" इति न्यायेन कार्यत्वादिप्रसङ्गस्य दुरुत्तरत्वात् । तस्यैवं यथोक्तविशेषणसहितायै संविदे त्रिविधोऽपि प्रह्वीभावो भवत्विति योजना ॥

संप्रति प्रकरणस्य सांप्रदायिकत्वेन विद्वद्भिरादरणीयत्वमादर्शयति–श्रीमदिति ॥ तस्य गुरोरुक्तसंभावतोऽङ्घ्री स्फुटे विकसिते, ताभ्यामुपमितौ ताभ्यां रजसां वातो

पञ्चप्रक्रियाव्याख्या

प्रकरणारम्भे अभिधानप्राधान्येन प्रणम्य अन्ते पुनरभिधेयप्राधान्येन प्रणामं करोति—बाह्येति ॥

स्वसंप्रदायपरिशुद्धिं प्रदर्शयन् प्रयोजनप्रकथनपूर्वकं प्रकरणार्थमुपसंहरति—श्रीमदिति ॥ ज्ञानवैमल्यसिद्धिरपि किमर्थेत्यत्राह—शब्दज्ञानमिति ॥

१. TM. या आभ्यन्तर २. G. वृत्तिभेदः

पञ्चप्रक्रियाटीका

नमःप्रसरः, तेन संपर्कात् मम वाङ्मनोदेहानां शुद्धिः सिद्धा। ततः समस्ते श्रुतिमार्गे तदर्थज्ञानापेक्षितं कौशलं सर्वज्ञात्मनो यतेः संवृत्तम्। स च मुनिः सर्वज्ञात्मा पूर्वोक्तरीत्या शब्दस्य तिस्रो वृत्तीः तदवान्तरभेदांश्च संभावितान् व्याख्यातवान्। व्याचख्याविति परोक्षवचनमाचार्यस्य अहङ्काराराहित्यप्रकटीकरणार्थम्। एवं सति अधिकृतानां संन्यासिनां चेतसि शब्दतो ज्ञानमसंभावनादिरहितं ते ति[जायेतेति]तथा च युक्तमिदं शब्दवृत्तिव्याख्यानमित्यर्थः। ननु प्रत्यक्षानुमानाभ्यामपि पुरुषार्थसिद्धेरुपपत्तेः अनर्थकमिदं शब्दवृत्तिव्याख्यानमिति, नेत्याह—शब्दज्ञानमिति॥ जगतोऽधिकृतस्य प्राणिवर्गस्य श्रेयः ब्रह्मज्ञानात् प्रेयश्च अग्निहोत्रादेः सिद्ध्यति; न च तदुभयं शब्दज्ञानं विना संभवति; न हि प्रत्यक्षादीनां[विना] ब्रह्म वा धर्मो वा निर्धारयितुं शक्यते, तयोः तदगोचरत्वेन शब्दमात्रप्रमाणकत्वाभ्युपगमात्; ततः शब्दवृत्तिव्याख्यानमर्थवदित्यर्थः॥

---

## ॥ द्वितीयं प्रकरणम् ॥

[महावाक्यार्थविवरणम्]

पञ्चप्रक्रिया

भाति विश्वं यदज्ञानाद् यद्ज्ञानाच्च निवर्तते ।
तस्मै बोधस्वरूपाय नमः शुद्धाय शार्ङ्गिणे ॥

अथातो वेदान्तमहावाक्यार्थं व्याख्यास्यामः । "अहं ब्रह्म" इति महावाक्यार्थज्ञानादेव मुमुक्षूणां मोक्षो भवति। महावाक्यार्थज्ञानं च भवति 'अहम्,

पञ्चप्रक्रियाटीका

एवं शब्दवृत्तिविवेकं कृत्वा प्रकरणान्तरं प्रारभमाणः भगवन्तं पुरुषोत्तमं प्रणमति—भातीति ॥ तज्ज्ञानस्य अज्ञानतत्कार्यनिवर्तकत्वमनायासेन संभवतीति वक्तुं विशिनष्टि—बोधस्वरूपायेति ॥ तद्रूपो हि परो वाक्योऽर्थे[वाक्यार्थ]बुद्धिवृत्त्यभिव्यक्तो निर्वतयत्यज्ञानं तत्कार्यं च, सहकारिसामर्थ्यादित्यर्थः । तस्याज्ञानतत्कार्यसंबन्धनिबन्धनमशुद्धत्वनीते[त्वं धुनीते]—शुद्धायेति ॥ मङ्गलाचरणस्य उद्देश्यं दर्शयति—अथेति ॥ शब्दवृत्तिविवेकानन्तरं महावाक्यव्याख्यानं कर्तव्यमित्यर्थः । ननु "अहं ब्रह्म" इति वाक्यार्थज्ञानमपि नोपयुज्यते; ततो मोक्षस्य कर्मसाध्यत्वात्; तथा च महावाक्यव्याख्यानमकिञ्चित्करम् इति, तत्राह—अहमिति ॥ न हि कर्मणा मोक्षः साध्यते, कृतकत्वेन अनित्यत्वप्रसङ्गात्; "न कर्मणा" इत्यादिनिषेधविरोधाच्च इत्यर्थः । तर्हि वाक्य[वाक्यार्थ]ज्ञानं वाक्यव्याख्यानादेव सिद्ध्यति, तथा च पदार्थपरिशोधनमस्थाने स्यादिति, नेत्याह—वाक्यार्थेति ॥ तर्हि पदद्वयार्थौ वक्तव्यौ, यद्ज्ञानाद्

पञ्चप्रक्रियाव्याख्या

शब्दवृत्तिप्रकारभेदप्रदर्शनानन्तरं तज्ज्ञापनायत्तमहावाक्यार्थव्याख्यानार्थं प्रकरणान्तरं प्रारिप्सुः तत्प्रतिपाद्यपरदेवताप्रणतिलक्षणं मङ्गलाचरणं करोति—भातीति ॥ मङ्गलाचरणोद्देश्यं दर्शयति—अथेति ॥ अथातःशब्दाभ्यां शब्दवृत्तिविवेकानन्तर्यम्, तस्य वाक्यार्थावगतिहेतुत्वं च उच्यते । किमर्थं तद्व्याख्यानमित्यत्राह—अहमिति ॥ तर्हि वाक्यव्याख्यानमेव क्रियताम्, व्यर्थं पदार्थपरिशोधनमित्याशङ्क्याह—वाक्यार्थेति[1] ॥ कौ तर्हि पदद्वयार्थावित्याकाङ्क्षायां

१. TM. व्याख्यार्थेति

पञ्चप्रक्रिया

ब्रह्म' इति पदद्वयार्थपरिज्ञानात् । पदद्वयार्थौ च द्विविधौ, वाच्यौ लक्ष्यौ च । तत्र वाच्यौ शबलौ; लक्ष्यौ शुद्धौ । प्राणपिण्डात्मककार्यशबलं प्रत्यक्-चैतन्यमपि देवपर्यन्तं[मधिदैवपर्यन्तं] अहंशब्दवाच्यम् । प्राणपिण्डकारणाविद्या-शबलं अद्वयानन्दचैतन्यं ब्रह्मशब्दवाच्यम् । एतदुक्तं भवति—सद्वितीयं

पञ्चप्रक्रियाटीका

वाक्यार्थे ज्ञानमित्याशङ्क्य तन्निष्ठमवान्तरभेदमावेदयति—पदायेति [पदद्वयेति] ॥ इदानीमहंशब्दवाच्यं विविच्य व्यपदिशति—प्राणेति ॥ प्राणः सूक्ष्मोपाधिः, पिण्डः स्थूलोपाधिः; तदुभयात्मकं यत्कार्यं तेन शबलं प्रत्यग्भूतं चैतन्यमहंशब्दवाच्यमिति संबन्धः। आध्यात्मिकाधिभौतिकोपाधिद्वारकं परिच्छिन्नत्वं परिहर्तुम् "हिरण्यगर्भतां नीत्वा तस्मै ब्रूयात्" इति न्यायमनुसृत्य विशिनष्टि—अधिदैवपर्यन्तमिति ॥ ब्रह्मशब्द-वाच्यं प्रतिदिशति—प्राणपिण्डेति ॥ तयोरेव कारणमविद्या; तया शबलं उक्तं चैतन्यं तत्पदवाच्यम् । प्राणपिण्डेत्यादिविशेषणं च कार्याभावे तदपेक्षितस्य कारणस्यापि भावायोगात् कार्यद्वारा कारणाधिगतिः सुकरेति दर्शयितुमित्यर्थः । कार्यशबलं प्रत्यक्चैतन्यं त्वंपदवाच्यम्; कारणशबलं अद्वितीयं चैतन्यं तत्पदवाच्य-मित्युक्तम् । तर्हि वाच्यार्थयोः विशेषणविशेष्यत्वम् । तेन विरोधप्रतीतौ जहदजहल्लक्ष-

पञ्चप्रक्रियाव्याख्या

तत्प्रतिपादनाय तद्गतावान्तरभेदमावेदयति । अहंशब्दाभिधेयं ब्रह्मशब्दाभिधेयं च क्रमेण प्रकट-यति—प्राणपिण्डेत्यादिना ॥ प्राणपिण्डशब्दाभ्यां सूक्ष्मस्थूलोपाधी प्रोच्यते । ननु पूर्वस्मिन् प्रकरणे सद्वितीयपारोक्ष्याभ्यां शबलं चैतन्यं महावाक्यगतपदद्वयाभिधेयमित्यभिहितम्; इह त्वन्य-थाभ्यभाणि; अतः पूर्वापरविरोध इत्याशङ्क्य तात्पर्यमाह—एतदुक्तमिति ॥ वाच्यार्थानु-वादपूर्वकं पदयोः सामानाधिकरण्यम्, अर्थयोः विशेषणविशेष्यभावः; ततो विरोधस्फुरणम्; ततो

१. G. विविधौ
२. G. तदत्र
३. TM omits शबलौ
४. TM. शुद्ध
५. TM omits अपि
६. TM. देववर्जं
७. The portion कार्याभावे...योगात् is read in the original after तर्हि. As found in the manuscript, the passage does not make sense.
८. TM adds विरोध
९. G. स्फुरणोऽस्ततो

## पञ्चप्रक्रिया

प्रत्यग्रूपमहंशब्दवाच्यं पारोक्ष्यसहितमद्वयानन्दचैतन्यं ब्रह्मशब्दवाच्यमिति तयोरहंब्रह्मशब्दवाच्ययोः कार्यकारणशबलयोः पदार्थयोः सामानाधिकरण्य-विशेषणविशेष्यभावेन विरोधस्फुरणे सति उभयत्र उपाधिपरित्यागः क्रियते; शुद्धौ पदार्थौ च लक्ष्येते। तत्र अहंपदेन प्राणपिण्डात्मककार्यसद्वितीयभाग-परित्यागेन प्रत्यक्चैतन्यभागो लक्ष्यते। ब्रह्मपदेन च प्राणपिण्डात्मक-कारणाविद्यापारोक्ष्यभागपरित्यागेन अद्वयानन्दचैतन्यभागो लक्ष्यते। एवं प्रत्यक्चैतन्यमहंपदेन, अद्वयानन्दचैतन्यं ब्रह्मपदेन, लक्षयित्वाव्तिष्ठमानस्य

## पञ्चप्रक्रियाटीका

णेति क्रमविवक्षया लक्ष्यावर्थावुपन्यस्यति—**तयोरित्यादिना** ॥ उभयत्रेत्याद्युक्त-मेव व्यक्तीकुर्वन् अहंपदस्य लक्षणां प्रकटयति —**तत्रेति** ॥ पदद्वयनिर्धारणार्था सप्तमी। उभयात्मकेन कार्येण वैशिष्ट्यादेव प्रतीचो यः सद्वितीयत्वाख्यो भागोऽवगतः तस्य त्यागेनेति यावत्। तयोः यत् कारणमविद्याख्यं तेन संबन्धात् ब्रह्मणि पारोक्ष्य-लक्षणो यो भागः सिद्धः तस्य त्यागेनेत्यर्थः। पदद्वयस्य वाच्यौ लक्ष्यौ चार्थौ विभज्य दर्शयित्वा वाक्यादधिकारिणो वाक्यार्थज्ञानोत्पत्तिप्रकारं प्रकटयति —**एवमित्यादिना** ॥ पदार्थपरिज्ञानवद् दुरितनिबर्हणमपि विशेष[षण]मधिकारिणो

## पञ्चप्रक्रियाव्याख्या

लक्षणेति क्रमं विवक्षुः लक्ष्यार्थौ दर्शयति—**तयोरित्यादिना** ॥ ब्रह्माहंपदयोः वाच्यौ लक्ष्यौ च अर्थौ प्रतिपादितौ। संप्रत्यधिकारिणो वाक्यार्थबोधोद्भवप्रकारं प्रदर्शयति—**एवमित्यादिना** ॥ तत्रैवमन्वयः—गुरुमुपसन्नस्य अहंपदेन प्रत्यक्चैतन्यं ब्रह्मपदेनाद्वयानन्दचैतन्यं चैवं लक्षयित्वा व्यवतिष्ठमानस्याधिकारिणः "अहं ब्रह्मास्मि" इति महावाक्यात् पदद्वयलक्षितयोरहंब्रह्मपदार्थयोः "ब्रह्मैवाहमस्मि" "अहमेव ब्रह्म" इत्यनुभवफलपर्यन्तमेकत्वज्ञानमुत्पद्यत इति। **"सर्वकर्मकाण्ड-फलभूतस्य"** इत्यस्य अयमर्थः—प्रत्यक्प्रवणचित्तस्येति। यद्वा दर्विहोमादिसहस्रसंवत्सरसत्य-[सत्र]पर्यन्तकर्मणामनुष्ठानाज् जगदात्मभावापत्तेः "हिरण्यगर्भतां नीत्वा तस्मै ब्रूयात्तपस्विने" इति

१. TM omits सहितं
२. TM. करणशबलयोः
३. G. विरोधास्फुरणे
४. TM. दर्शयति

पञ्चप्रक्रिया

यज्ञादिक्षपितकल्मषस्य सर्वकर्मकाण्डफलभूतस्य सर्वकर्मसंन्यासिनः साक्षात्कृतब्रह्माणं जीवन्मुक्तं सम्यग्ज्ञानाग्निदग्धसमस्तदुःखनिदानं सर्वलक्षणसंपन्नं स्वाज्ञानकल्पितस्वप्नदृश्यकल्पितगुरुमिव कल्पितसब्रह्मचारिसहस्रपरिवेष्टितं

पञ्चप्रक्रियाटीका

वक्तव्यमित्याह–यज्ञादीति ॥ बुद्धिशुद्धिरपि पुरुषसंस्काररूपा भावभूता तस्य विशेषणमित्याह—सर्वकर्मेति ॥ अथ वा हिरण्यगर्भभावोऽपि विशेषणमस्येत्येतदनेन प्रोच्यते। दर्विहोममारभ्य सहस्रसंवत्सरत्रय[सत्र]पर्यन्तस्य क्रमेण कर्मणोऽनुष्ठानादशेषजगदात्मत्वं हिरण्यगर्भभावं प्राप्तस्य प्राप्तव्यान्तरमप्रतिपद्यमानस्य गार्ग्यवदवस्थितस्येत्यर्थः। तस्य च विरक्तस्य पारिव्राज्यं विशेषणीभवतीत्याह—सर्वकर्मसंन्यासिन इति ॥ न च तस्य गुरूपगमनमन्तरेण ज्ञानोत्पत्तिरित्यभिप्रेत्य गुरुं विशिनष्टि—साक्षात्कृतेति ॥ न हि परोक्षज्ञानवतो गुरुत्वम् "उपदेक्ष्यन्ति ते ज्ञानम्" इत्यत्र ज्ञानित्वव्यतिरेकेण तत्त्वदर्शित्वविशेषणदर्शनादिति भावः। तस्य सद्योमुक्तिसंभवे कथमुपदेशकर्तृत्वमित्याशङ्क्य जीवन्मुक्तिविषयं शास्त्रमाश्रित्य विशिनष्टि—जीवन्मुक्तमिति ॥ तदेव व्यक्तीकरोति—सम्यग्ज्ञानेति ॥ तत्तस्य[तत्त्वज्ञानस्य] अनारब्धाशेषकर्मनिवर्तकत्वेऽपि न प्रारब्धकर्मनिवर्तकत्वम्, अयोग्यत्वादविरोधमिति[दित्यविरोधं] दर्शयितुं तस्मिन्नग्निपदम्। श्रोत्रियत्वब्रह्मनिष्ठत्वोपशान्तत्वदान्तत्वादिगुणसमुदायसंपत्तिं संगिरते—सर्वलक्षणेति ॥ तस्य शिष्याविद्याकल्पितत्वेन पारमार्थिकत्वं परिहरति—स्वाज्ञानेति ॥ अविद्याकल्पितस्य रज्जुसर्पवस्तुत्वात्म[सर्पवदवस्तुत्वादुपदेष्टृत्वं] अश्लिष्टमित्याशङ्क्य तस्य सवर्ण[सर्वज्ञ]त्वेन कल्पितत्वान्मैवमिति मन्वानो दृष्टान्तमाह—स्वप्नेति ॥ तस्याचार्यत्वनिर्धारणोपायमुपदिशति — कल्पितेति ॥ न च यथा गुरूपसदनमात्रादस्य

पञ्चप्रक्रियाव्याख्या

वचनाच्च हिरण्यगर्भभावमापन्नस्येति। यं कंचिद्गुरुमुपसन्नस्य न बोधजन्मेति दर्शयितुं तं विशिनष्टि-साक्षात्कृतेत्यादिना॥ न चाज्ञानकल्पितत्वेन गुरोरवस्तुत्वादुपदेष्टृत्वानुपपत्तिरिति शङ्कनीयम्,

१. G. कलुषस्य
२. TM. ज्ञानं निर्दग्ध
३. G omits तं

## पञ्चप्रक्रिया

गुरुमुपसन्नस्य तत्प्रसादलब्धश्रवणमननिदिध्यासनाभ्यासनिरस्तासंभावना-विपरीतभावनातात्पर्यज्ञानसंशयविपर्ययस्य परमेश्वरानुगृहीतस्य अधिकारिणः "ब्रह्मैवाहमस्मि" "अहमेव ब्रह्म"इति पदद्वयलक्षितयोरहंब्रह्मपदार्थयोः "अहं ब्रह्मास्मि" इति महावाक्यादनुभवफलपर्यन्तमेकत्वज्ञानमुत्पद्यते, अधिकारिणः

## पञ्चप्रक्रियाटीका

ज्ञानमुत्पद्यते, किन्तु चिरतरपरिचयात् तत्प्रसादासादितश्रवणाद्यभ्यासप्रध्वस्तप्रतिबन्धस्य तदुत्पत्तिरित्यधिकारिणो विशेषणान्तरं दर्शयति—तत्प्रसादेति ॥ "ब्रह्मा [ब्रह्मैवाह]स्मि" इति ज्ञानवासनावैधुर्यमसंभाव[भावना]; देहाद्यात्मत्ववासनावत्त्वं विपरीतभावना; तत्परत्वाज्ञानम्, अतत्परत्वज्ञानं चातात्पर्यज्ञानम्; अहं ब्रह्मणोऽन्योऽनन्यो वेति संशयः; देहाभावात्म[देहे आत्म]त्वाभिमानो विपर्यय इति विभागः। गुर्वनुग्रहवदीश्वरानुग्रहोऽपि तस्य विशेषणम् "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः इत्याह — परमेश्वरेति ॥ यथोक्तविशेषणवतोऽधिकारिणो भवत्येकत्वज्ञानमिति संबन्धः। कथमेकत्वज्ञानमित्युक्ते व्यतिहारेणेति विशिनष्टि—ब्रह्मैवेति ॥ कयोरेकत्वमिति शङ्कां वारयति— पदद्वन्द्वयेति[पदद्वयेति] ॥ ज्ञानस्य परोक्षत्वं पराकरोति — अहमिति ॥ यदेकत्वज्ञानमुत्पद्यते तत् 'अहं ब्रह्मास्मि' इत्यनुभवफलपर्यन्तमिति योजना। न च तत् अभ्यासादिसाधनान्तराधीनम्, तस्याप्रमाणत्वादिति मत्वाह—महावाक्यादिति ॥ न सर्व[नन्वस्म]दादीनां श्रुतमहावाक्यानामपि कथं यथोक्तज्ञानं नोत्पद्यते, अधिकारित्वाभावादित्याह—अधिकारिण इति ॥

## पञ्चप्रक्रियाव्याख्या

तस्य सर्वज्ञत्वेन कल्पितत्वात्। ब्रह्मास्मीति ज्ञानवसानविधुरत्वमसंभावना; देहाद्यात्मत्ववासना[१] विपरीतभावना; वेदान्तानामैक्यपरत्वानवगतिः अतत्परत्वावगतिश्च अतात्पर्यज्ञानम्[३]; किमहं ब्रह्मणोऽन्योऽनन्यो वेत्यादिः संशयः। अन्य एवेत्यादिर्विपर्ययः। नन्वस्याधिकारिणः कथमेवंविधबोधोद्भवः, अस्मदादीनां श्रुतवेदान्तानामपि तादृग्बोधानुपलम्भात् इत्याशङ्क्य अधिकारित्वाभावात् भवताम्; अस्य पुनस्तद्भावात् इत्याह—अधिकारिण[२] इति ॥ अनुभवफलपर्यन्तमेकत्वज्ञानमुत्पद्यत

१. TM. असद्भावना
२. TM. कारिणि
३. G. तात्पर्य-

पञ्चप्रक्रिया

प्रमितिजनको वेदः इति न्यायात् । तस्माज् ज्ञानोदयादज्ञानतत्कार्यनिवृत्तौ बाधितानुवृत्त्या जीवन्मुक्तरूपेण परब्रह्मताजीवन्मुक्त्योः युगपदनुभवाविरोधेन कश्चित्कालमवस्थितस्य शरीरारम्भकयोः पुण्यपापयोरुपभोगादेव क्षपणात्, सञ्चितकर्मणां सम्यग्ज्ञानाग्निदग्धत्वात्, आगामिनोश्च पुण्यपापयोः अकरणात्, कथंचित्करणे तयोरपि ज्ञानादश्लेषाद्वर्तमानदेहपाते सति—हेत्वभावे

पञ्चप्रक्रियाटीका

उक्तरीत्या उत्पन्नैकत्वज्ञानस्य फलमाह — तस्माज् ज्ञाना[ज्ञानोदया]दिति ॥ तर्हि सद्योमुक्तिप्रसक्तेः तदेव[तदैव] शरीरपातापातात् कुतः संप्रदायसिद्धिः इत्याशङ्क्याह—बाधितेति ॥ कथं तर्हि तस्य विदेहकैवल्यसिद्धिः शरीरवतो धर्माधर्मसंभावनया शरीरारम्भसंभवात् इत्याशङ्क्य प्रारब्धेन वा सञ्चितेन वा कर्मणा तदारम्भः स्यात् इति विकल्प्य प्रथमं प्रत्याह—शरीरेति ॥ द्वितीयं दूषयति—सञ्चितेति ॥ तृतीयं निरस्यति—आगामिनोश्चेति ॥ आत्मज्ञानवतोऽपि तदनुसन्धानाभावावस्थायां रागादिदोषोद्भवात् पुण्यपापोपार्जनं संभावनोपनीतमित्याशङ्क्याह — कथंचिदिति ॥ देहान्तरारम्भे हेत्वभावमुपपाद्य फलितमाह — वर्तमानेति ॥ 'शरीरान्तरानुत्पत्तेरात्यन्तिकं कैवल्यं भवत्येव' इत्युत्तरत्र संबन्धः। ज्ञानादज्ञानतत्कार्यनिवृत्तौ अज्ञानकल्पितसर्वगतत्वादेरपि निवृत्तेः ब्रह्मपदार्था-

पञ्चप्रक्रियाव्याख्या

इत्युदितम्। तस्य फलं दर्शयति "तस्मात्" इत्यारभ्य "विदुष आत्यन्तिकं कैवल्यं भवत्येव" इत्यन्तेन ग्रन्थेन । तत्रैवं संबन्धः—तस्माज्ज्ञानादज्ञानतत्कार्यनिवृत्तौ किञ्चित्कालमवस्थितस्य विदुषः शरीरान्तरानुत्पत्तेः आत्यन्तिकं कैवल्यं भवत्येवेति। न सज्ज्ञान[नन्वज्ञान]निवृत्तौ तत्कार्यत्वाद्देहस्यापि निवृत्तेः सद्योमुक्तिप्रसक्तेः संप्रदायविच्छित्तिरित्याशङ्क्याह—बाधितेति ॥ कथं तर्ह्यात्यन्तिकं कैवल्यं लभ्यते ज्ञानजन्मोत्तरकालं देहस्थितिवत् देहान्तरोद्भवस्यापि संभवात् इत्याशङ्क्य त्रिविधस्यापि कर्मणोऽनारम्भकत्वात् नेत्याह—शरीरेत्यादिना ॥ कथं पुनः आगामिकर्मणोऽकरणम्, विदुषोऽपि रागद्वेषादिवशात् तदुपार्जनोपपत्तेरित्याशङ्क्याह—कथंचिदिति ॥

१. TM. परब्रह्म शरीरस्थित्योः युगपदनुभवत्वाविरोधेन

२. TM. ज्ञाननिर्दग्धत्वात्

३. TM. कालमेव

४. TM omits आदि

पञ्चप्रक्रिया

फलाभावात्—शरीरान्तरानुत्पत्तेः सर्वगतत्वसर्वज्ञत्वसर्वेश्वरत्वसर्वात्मत्वसत्यसङ्कल्पत्वादीनां अज्ञानकल्पितानां गुर्वाकाशादिप्रपञ्चवत् अज्ञानाभावे यद्यप्यभावः, तथापि निर्गुणब्रह्मपरसमस्तवेदशाखोपनिषद्गतापुनरुक्तसमस्तपदोपसंहारेण विधिमुखेन प्रवृत्तमहावाक्यशेषावान्तरवाक्यपरिमाणपरिज्ञानाभ्युपगमात्, सामानाधिकरण्यविशेषणविशेष्यभावेन विरोधस्फुरणे लक्ष्यलक्षणभावेन हेयांशहानोपादेयांशोपादानन्यायोपपत्तेः, पदार्थज्ञानसमुत्थवाक्यार्थज्ञानसमूलदाहदग्धजगत्परिशिष्टनित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वय-

पञ्चप्रक्रियाटीका

निर्धारणाद्वाक्याद्वाक्यार्थज्ञानानुत्पत्तिरित्याशङ्क्याह — सर्वगतत्वेति ॥ तेषामज्ञानकल्पितत्वाज् ज्ञानोदयानन्तरीयकत्वेन निवृत्तावपि गुणोपसंहारन्यायेन सगुणविद्यागतगुणानां निर्गुणविद्यासिद्ध्यर्थमुपसंहारात् निर्गुणविद्यागतापुनरितर[नरुक्त]शब्दानां च तत्पूर्णतायै तत्रोपसंहाराविरोधात् तत्त्वमस्यादिवाक्यशेषावान्तरवाक्यपरिमाणनिर्धारणात् पदार्थज्ञानमविरुद्धं सिद्ध्यतीत्याह — तथापीति ॥ अवान्तरवाक्यपरिमाणपरिज्ञाने च पदार्थज्ञानसंभवात् उक्तन्यायेन पदार्थपरिज्ञानद्वारा वाक्यादुत्पन्नं वाक्यार्थज्ञानम्, तेन च मूलभूताज्ञानदाहसहितं दग्धद्वैतप्रपञ्चं ब्रह्म भवतीत्याह—सामानाधिकरण्येति ॥ यदि यथोक्ताज्ञानादशेषमपि सजगन्मूलं जगद् ध्वस्तमिष्यते तर्हि शून्यवादावकाशः स्यादित्याशङ्क्याह —परिशिष्टेति ॥ तस्य कार्येण सहात्यन्तिकमेकत्वं व्यावर्तयति—नित्येति ॥ तेन तादात्म्यं व्यवच्छिनत्ति—शुद्धेति ॥ कारणेन सह आत्यन्तिकमभेदं व्यासेधति—बुद्धेति ॥ तेनापि तादात्म्यं निरस्यति—मुक्तेति ॥ उक्तैरेव विशेषणैरबाध्यत्वं सिद्धमित्याह —

पञ्चप्रक्रियाव्याख्या

नन्वेवमपि कथं कैवल्यलब्धिः, बोधादबोधतत्कार्यनिवृत्तौ सर्वगतत्वादीनामपि निवृत्तेः ब्रह्मपदार्थापरिज्ञानात् वाक्यार्थज्ञानानुपपत्तेरित्याशङ्क्य तेषामभावे गुणोपसंहारन्यायेन पदार्थपरिज्ञानोपपत्तेः; नेत्युत्तरमाह—सर्वगतत्वेत्यादिना ॥ जीवन्मुक्तगुरुद्वारकब्रह्मात्मैकत्वबोधेन कैवल्यलब्धिरित्यत्र

१. G omits सर्वेश्वरत्व
२. TM. प्रपञ्चपद
३. G omits अपि
४. G. वेदोप
५. TM. लब्धि

पञ्चप्रक्रिया

चित्प्रत्यग्ब्रह्मस्वरूपावस्थानलक्षणमात्यन्तिकं कैवल्यं विदुषो भवत्येव । "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति "तस्य ह न देवाश्चनाभूत्या ईशते" इत्यादिश्रुतेः । उत्क्रान्तिगत्यागति-

पञ्चप्रक्रियाटीका

सत्येति ॥ तस्य परमपुरुषार्थतया शास्त्रप्रतिपाद्यतामाह—परमानन्देति ॥ सर्वप्रकारभेदराहित्योपलक्षितत्वेन परिपूर्णतामाह—अद्वयेति ॥ तस्य सर्वदाभासमानत्वं दर्शयति—चिदिति ॥ ब्रह्मणो यथोक्तलक्षणत्वेऽपि प्रत्यगात्मनि किमायातमित्याशङ्क्याह—प्रत्यगिति ॥ एतच्च निरुपाधिकं रूपमादर्शितमित्याह—स्वरूपेति ॥ तच्चेदं कैवल्यं पुनरावृत्तिरहितमित्याह—आत्यन्तिकमिति ॥ ब्रह्मात्मज्ञानाज्जीवन्मुक्तिद्वारा विदेहकैवल्यं सिद्ध्यतीत्यत्र छान्दोग्यश्रुतिमुदाहरति-आचार्यवानिति ॥ यो हि पुरुषः शुश्रूषयाधिकरोत्याचार्यं स तद्वान् भूत्वा तदुपदेशादात्मानं यथावदवगच्छति; तस्य च विदुषः तावानेव मोक्षप्राप्तौ क्षेपो यावदस्माद्देहान्न वियुज्यते; प्रारब्धस्य कर्मणो भोगेन क्षयाद् देहवियोगानन्तरं ब्रह्मणि सति संपन्नो भवतीत्यर्थः । ननु विदुषोऽपि कैवल्यं कदाचिद्देवादयो विघ्नन्ति । न हि मनुष्याणां देवपशुत्वात् व्यावृत्तिस्तेषामभिमता, "तन्न प्रियं यदेतन्मनुष्या विदुः" इति श्रुतेः इत्याशङ्क्य बृहदारण्यकश्रुतिं पठति — तस्य हेति ॥ देवादयः शक्तिमन्तोऽपि सन्तः तस्य विदुषोऽभूतिरभवनमब्रह्मभावः, तदर्थं नैवेशाना भवन्ति "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानस्यावश्यकफलत्वावगमादित्यर्थः । श्रुतिस्मृतिसिद्धां जीवन्मुक्तिमुपेत्य ज्ञानस्यैकान्तिकफलत्वमुक्तम् । इदानीं पक्षान्तरमाह—उत्क्रान्तीति ॥ तासु कारणं देहेन्द्रियादितादा[दात्म्यं तद]भावाद् विदुषः सद्योमुक्तिरेव युक्ता "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते" इति श्रुतेः उत्क्रान्त्यादिनिषेधाच्च ज्ञानवतः सैव

पञ्चप्रक्रियाव्याख्या

श्रुतिं प्रमाणयति — आचार्यवानित्यादिना ॥ एवं जीवन्मुक्तगुरूपदिष्टज्ञानवशादात्यन्तिकं निःश्रेयः सेत्स्यतीत्युक्तम्[1] । संप्रति ज्ञानमाहात्म्यं संदर्शयितुं स्वयूथ्याभिमतं सद्योमुक्तिपक्षमुपक्षिपति—"उत्क्रान्ति" इत्यादिना "केचित्[3]" इत्यन्तेन ग्रन्थेन । तत्र सद्योमुक्तिरेव युक्ततरा[2]

१. TM. प्रत्यक्षा
२. G. युक्तम्
३. TM. Space is left out for writing केचित्

## पञ्चप्रक्रिया

कारणाभावात् तत्प्रतिषेधश्रुतेश्च सद्योमुक्तिरेव जीवन्मुक्तिश्रुतिस्मृतीनां कल्पितजीवन्मुक्तगुरुविषयत्वात्[1] शिष्यस्य विदुषो जीवन्मुक्त्यभ्युपगमे च ज्ञानदग्धाभासमात्ररूपं शिष्यं प्रत्युपदेष्टृत्वासंभवाद् विदुषो जीवन्मुक्तेः प्रयोजनाभावात् चिरश्रुतिश्चाज्ञाननिद्राभिहननापनयनमात्रविलम्बिकैवल्याभिप्रायत्वाद्युक्ततरेति केचित् ॥

## पञ्चप्रक्रियाटीका

न्याय्येत्यर्थः । तर्हि जीवन्मुक्तिविषयश्रुतिस्मृतीनाम् "तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत" "सचक्षुरचक्षुरिव" "स्थितप्रज्ञस्य का भाषा" "प्रजहाति यदा कामान्" इत्यादीनां का गतिरित्याशङ्क्याह—जीवन्मुक्तेति ॥ कल्पितो जीवन्मुक्तो गुरुः न वस्तुतोऽस्ति; तद्विषयत्वममूषामिष्यते । तथा च विद्योदये सद्योमुक्तिः वस्तुतो भवतीत्यभ्युपगमेन प्रदर्शितश्रुतिस्मृतिप्रकोपोऽस्तीत्यर्थः । किञ्च न विदुषः शिष्यं प्रत्युपदेशो युज्यते, शिष्यसंघातस्य दग्धपटवत् ज्ञानदग्धस्याभासमात्रस्योपेक्षणीयत्वेन उपदेशायोग्यत्वात्; अतश्च प्रयोजनाभावात् नाभ्युपगन्तव्या जीवन्मुक्तिः इत्याह—विदुष इति ॥ जीवन्मुक्त्यनङ्गीकारे "तस्य तावदेव चिरम्" इति सत्यपि ज्ञाने क्षेमप्राप्तेः विलम्बवाचिनी चिरश्रुतिः अनुचिता स्यादित्याशङ्क्याह—चिरश्रुतिश्चेति ॥ अज्ञानमेव महती निद्रा; सैवाभिहननमात्मनो बन्धनमाच्छादनम्, तस्यापनयनमपाकरणम्, तावन्मात्रं विलम्बमवलम्ब्य कैवल्यमित्यभिप्रायेण प्रवृत्तत्वादेषा श्रुतिः युक्तैव । पक्षान्तरे पुनरियमयुक्ता, ज्ञानोदयानन्तरीयकत्वेनाज्ञानतत्कार्यनिवृत्तेरिष्टत्वादिति मत्वा युक्ततरेत्युक्तम् । स्वयूथ्यमतमेतदनादरणीयमित्यभिप्रेत्याह—केचिदिति ॥

## पञ्चप्रक्रियाव्याख्या

इति केचित् इत्यन्वयः । तत्र किमुत्क्रान्त्यपेक्षत्वान्मुक्तेः जीवन्मुक्त्यङ्गीकारः, किं वा प्रमाणवत्त्वात्, अथवा उपदेष्टृसिद्ध्यर्थमिति विकल्प्य क्रमेण दूषणमाह—उत्क्रान्तीत्यादिना ॥

१. TM. मुक्त
२. G. Space is left out for writing क्तगुरु
३. G. शिष्यसंप्रति
४. G. श्रुतित्वाज्ञान
५. TM. हननात् नयन
६. G. Space is left out for writing विकल्प्य क्रमेण दूष

पञ्चप्रक्रिया

भूमन्यवस्यति नमस्यति वासुदेवं
सङ्गं निरस्यति तपस्यति तत्त्वमर्थम् ।
संन्यस्य कर्म परि[वरि]वस्यति वेदितारं
धन्यो जयत्ययमहो मुनिरेकदण्डी ॥

पञ्चप्रक्रियाटीका

तदेव महावाक्यव्याख्यानं फलपर्यन्तं कृत्वा संन्यासिनामत्र तद्व्याख्यानश्रवणाधिकारितेति दर्शयितुं संन्यासिनो महीकरोति — भूमन्निति ॥ परिपूर्णे परस्मिन्नात्मनि परिव्राजको ज्ञानातिशयवशात् पर्यवसानं प्राप्नोतीत्यर्थः । ज्ञानातिशयप्राप्तावन्तरङ्गभगवद्भजनम् "मत्कर्मकृत्"इत्यादिस्मृतिसिद्धमुपन्यस्यति–नमस्यतीति॥ प्रणत्या पूजयतीति यावत् । शब्दादिषु विषयेषु आसङ्गाभावोऽपि तत्र हेतुरित्याह— सङ्गमिति ॥ तत्त्वंपदार्थपरिशोधनार्थमन्वयव्यतिरेकरूपमालोचनमपि तत्र कारणमित्याह—तपस्यतीति ॥ तदर्थं त्वमर्थं पदमालोचयतीति यावत् । विधिपूर्वकं कर्मपरित्यागद्वारा विदुषो गुरोरनुसरणमपि तत्र कारणीभवतीत्याह—संन्यस्येति ॥ परि[वरि]वस्यति परिचरतीत्येतत् । यथोक्तसाधनसंपत्त्या ज्ञानातिशयसंपन्नो मुख्यः संन्यासी जगत्याश्चर्यो दुर्लभः । 'मनुष्याणां सहस्रेषु कश्चिदेव' इत्याद्यधिकारिणं स्तौति —धर्मन्य[धन्य] इति ॥ विद्यामाहात्म्यात् तदधिकारिणो दौर्लभ्यमित्यभिसन्धाय तन्माहात्म्ये श्रुतिस्मृतिप्रसिद्धिं द्योतयति—अहो इति ॥

पञ्चप्रक्रियाव्याख्या

एवं महावाक्यं व्याख्याय तदर्थपरिज्ञाने परमहंसस्यैवाधिकार इति दर्शयितुं तं[3] महीकरोति– भूमन्नित्यादिना श्लोकेन ॥ तत्रैवं क्रमः—पूर्वं वासुदेवं नमस्यति; तदनन्तरं संशरस्यति[4] [सङ्गं निरस्यति]; ततः कर्म संन्यस्य वेदितारं वरिवस्यति परिचर्यां करोति । ततस्तदर्थं त्वमर्थं[5] च तपस्यति तदर्थालोचनं करोति; ततो भूमन्यवस्यति परिपूर्णब्रह्मात्मनावतिष्ठते मुनिरेकदण्डी । ततो धन्य इति । तन्महीकरणमात्मज्ञान[6]महीकरणार्थम् । अहोशब्द आर्य[आश्चर्य]वाचकः ॥

१. TM omits नमस्यति
२. G. न पश्यति
३. G. तमङ्गीकरोति
४. G. Space is left out for सं...स्यति
५. G omits त्वमर्थं
६. TM. मोक्षज्ञान

## पञ्चप्रक्रिया

श्रीदेवेश्वरपादपङ्कजरजस्संपर्कपूतात्मना
सर्वज्ञात्मगिराङ्कितेन मुनिना व्याख्यानमेतत् कृतम् ।
ब्रह्मात्मैक्यपरस्य वेदशिरसः संन्यासिनां श्रेयसे
तैरेवं निजधर्मपालनपरैर्नित्यं निषेव्यं तु तत् ॥

इति महावाक्यार्थः समाप्तः

## पञ्चप्रक्रियाटीका

संप्रति वृत्तस्य महावाक्यव्याख्यानस्य संप्रदायागतत्वादादरणीयत्वं दर्शयति—श्रीदेवेश्वरेति ॥ प्रमाणप्रमेयद्वारकमपि दोषराहित्यमस्य कथयति—ब्रह्मेति ॥ ख्यात्यादिसिद्ध्यर्थं व्याख्यानस्य तत्त्वे कथं तस्या व्य[तस्य निषेव्य]त्वमित्याशङ्क्याह—संन्यासिनामिति ॥ यतः संन्यासिनां श्रेयस्सिद्ध्ये व्याख्यानमिदं कृतम्, न तु ख्यातिलाभपूजार्थं ततस्तैरालस्यरहितैः सर्वदा श्रोतव्यमित्याह—तैरिति ॥ तर्हि यथोक्तव्याख्यानश्रवणादिपराणां यथेष्टाचरणेऽपि न दूषणमित्याशङ्क्याह—एवमिति ॥ श्रुतिस्मृतिप्रदर्शितक्रमेण स्वधर्मनिरतैरिदं श्रोतव्यं व्याख्यातव्यं चेत्यर्थः ॥

## पञ्चप्रक्रियाव्याख्या

इदानीं स्वसंप्रदायशुद्धिं ख्यापयन् महावाक्यार्थव्याख्यानं निगमयति—श्रीमद्देवे-[श्रीदेवे]श्वरेति ॥

---

# ॥ तृतीयं प्रकरणम् ॥

## [तत्त्वंपदार्थव्याख्यानम्]

—⁂—

### पञ्चप्रक्रिया

महदादिजगद्यस्माज्जातं रज्जुभुजङ्गवत् ।
तं नमामि सदानन्दमन्तर्धीनृत्तसाक्षिणम् ॥[1]

### पञ्चप्रक्रियाटीका

पूर्वस्मिन् प्रकरणे महावाक्यं व्याख्याय तदर्थत्वेन पदार्थव्याख्यानं प्रारभमाणो देवताभक्तेः ज्ञानं प्रत्यन्तरङ्गत्वमप[रङ्गत्वमव]गमयन् परां देवतां नमस्यति-महदादीति ॥ महानाद्यो विकारः स यस्यादिरिति तद्गुणसंविज्ञानो बहुव्रीहिः । परिणामव्युदासेन विवर्तपादं[वादं] विशदयन् दृष्टान्तमाह — रज्जुभुजङ्गादिति[ङ्गवदिति ॥] भक्तिश्रद्धयोरतिरेकेण क्रियमाणा नमस्क्रिया फलवतीति मन्वानः सन् आह — सदेति ॥ तस्य परमपुरुषार्थरूपत्वमाह—आनन्दमिति ॥ अथवा सदानन्दमित्येकं विशेषणम् । तत्र सत्त्वेन कारणनिरपेक्षतया कार्यत्वं निराकृत्य कारणत्वं समर्थ्यते । तस्य चानन्दत्वेन शास्त्रप्रतिपाद्यत्वमवद्योत्यते । तस्येदानीं प्रत्यक्त्वमाह-अन्तरिति ॥ अन्तरात्मानमित्यर्थः । तस्य बुद्ध्यादिगुणाधारत्वं वारयति—धीनृत्तेति ॥ अथवा कार्यकारणसङ्घातस्य अन्तः मध्ये या धीः तस्या नृत्तं बुद्ध्यादिविपरिणामः । तस्य साक्षी, न पुनस्तस्य अधिकरणमित्यर्थः ॥

### पञ्चप्रक्रियाव्याख्या

महावाक्यव्याख्यानानन्तरं तदङ्गत्वेन[2] पदार्थव्याख्यानार्थं प्रकरणान्तरं प्रारिप्सुः परदेवता-[3]नमस्कारलक्षणं मङ्गलमाचरति—महदादीति ॥ महान् आद्यो विकारः ॥

१. G. सदा...न्तर्धी
२. TM. तदंशत्वेन
३. G omits पर

## पञ्चप्रक्रिया

तच्छब्द[सच्छब्द]वाच्यमविद्याशबलं ब्रह्म। तस्मादाकाशवायुतेजोऽबन्नानि पञ्च महाभूतानि क्रमेण जातानि। अन्नशब्देन पृथिव्युच्यते। तस्मादा[सत आ]काशः। आकाशाद्वायुः। वायोस्तेजः। तेजस आपः। अद्भ्योऽन्नम्। अन्नशब्दवाच्या पृथिवी। एवमेतान्यपञ्चीकृतमहाभूतानि। तेभ्यः सप्तदशकं लिङ्गमुत्प-

## पञ्चप्रक्रियाटीका

तत्त्वंपदार्थव्याचिख्यासया परदेवताप्रणतिमङ्गलाचरणं कृत्वा तच्छब्दवाच्यमर्थं निर्दिशति — सच्छब्देति ॥ तस्मिन् कार्यलिङ्गकमनुमानं दर्शयितुं तस्य महाभूतकारण[णत्व]माह-तस्मादिति ॥ ननु कथं महाभूतसर्गप्रकरणे व्रीहियवादिकमन्नमुपसंख्यायते? अत्राह—अन्नशब्देनेति ॥ महाभूताधिकारात् "अद्भ्यः पृथिवी" इति च श्रुतेः "ता अन्नमसृजन्त" इत्यत्रापि पृथिव्यामेव अन्नशब्दप्रयोगात् न प्रसिद्धमन्नं व्रीह्यादीह ग्राह्यमित्यर्थः। क्रमेण जातानीत्युक्तम्; तमेव क्रमं तैत्तिरीयश्रुत्यवष्टम्भेन व्याचष्टे-सत इति ॥ अद्भ्योऽन्नम् इत्यत्र अन्नशब्दार्थं पूर्वोक्तमेव स्मारयति-अन्नशब्देनेति[ब्देति] ॥ न हीहान्नशब्देन व्रीह्यादि ग्राह्यम्, "पृथिव्या ओषधयः" इत्यद्भ्यःसंभूतपृथिवीकार्यत्वावगमादित्यर्थः।यानि महाभूतानि क्रमेण जातान्युक्तानि तान्यपञ्चीकृतानि पञ्चीकृतानि वेति वीक्षायां त्वंपदवाच्यमर्थमभिधित्समानो हिरण्यगर्भोत्पत्तिविवक्षया भूमिकामाह-एवमिति ॥ तेभ्यः समुदितेभ्यो विज्ञानक्रियाशक्तिद्वयात्मकस्य

## पञ्चप्रक्रियाव्याख्या

एवं मङ्गलाचरणं विधाय तच्छब्दवाच्यमर्थमाह—तच्छ[सच्छ]ब्देति ॥ त[स]च्छब्दवाच्यमर्थमभिधाय त्वंपदाभिधेयमभिधत्ते "तस्मात्" इत्यादिना "एक एव शरीरद्वयाभिमानी जीवस्त्वंपदार्थः" इत्यन्तेन ग्रन्थेन। हिरण्यगर्भोत्पत्तिमुपदर्शयितुमपञ्चीकृतपञ्चमहाभूतोत्पत्तिमाह—तस्मादिति ॥ महाभूतसर्गप्रकरणे कस्मादकस्मादन्नसृष्ट्यभिधानमित्यत्राह—अन्नशब्देनेति ॥ ननु छान्दोग्ये सच्छब्दवाच्याद् भूतत्रयसृष्टिरेवोच्यते, न पञ्चभूतसृष्टिरित्याशङ्क्य तैत्तिरीयकश्रुतिसंश्रयेण पूर्वोक्तं क्रमं व्यक्तीकरोति-सत इति ॥ तान्यपञ्चीकृतानि किंवा पञ्चीकृतानि इत्याकाङ्क्षायामाह—एवमिति ॥ अपञ्चीकृतभूतकार्यजन्मनि हिरण्यगर्भजन्म सेत्स्यतीत्यभिप्रेत्य तदुद्भवं दर्शयति—

१. G omits पञ्च महा
२. TM. वायोरग्निः
३. G. लिङ्गात्
४. TM omits हिरण्य

पञ्चप्रक्रिया

त्मम् । वाक्पादपाणिपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमिति पञ्च बुद्धीन्द्रियाणि । प्राणापानव्यानोदानसमाना इति पञ्च वायवः । मनोबुद्धिश्चेत्यन्तःकरणद्वयम्; संशयात्मकं मनः, निश्चयात्मिका बुद्धिः— इत्येकमन्तः[मेवान्तः]करणमुभयथा व्यपदिश्यते, क्रियाभेदात्, पाचकलावकादिवदित्येतत् सप्तदशकं लिङ्गमु[लिङ्गमित्यु]च्यते । अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सप्तदशकं लिङ्गं हिरण्यगर्भः त[एत]त्सूक्ष्मशरीरमात्मनः

पञ्चप्रक्रियाटीका

सूत्रात्मनो जन्म निर्दिशति—तेभ्य इति ।। कथं तस्य सप्तदशकत्वम्? तदाह— वागित्यादिना ।। मनोबुद्धी विभजते-संशयात्मकमिति ।। ननु संशयकारणमन्यत्; अन्यच्च निश्चयकारणमिति द्रव्यभेदः; तद्भावे लिङ्गस्य सप्तदशकत्वव्याघातात् इति; तत्राह— इत्येकमेवेति ।। द्रव्यभेदे कल्पनागौरवात्, एकमेव द्रव्यं कल्पनालाघवाद् उभयथाव्यपदेशभागित्यर्थः । तर्हि कथमेकत्वे व्यपदेशभेदोपपत्तिरित्याशङ्क्याह— क्रियाभेदादिति ।। वस्तुनो भेदाभावेऽपि विक्रियाद्वयकृतं भेदमादाय सप्तदशकत्वोपपत्तिरित्युपसंहरति—इत्येतदिति ।। तस्य लिङ्गत्वं प्रत्यगात्मगमकत्वात् । तद्गमकत्वं च सप्तदशकान्तर्भूतवागादिसाक्ष्यापेक्षया साक्षिणः सिद्धेरित्याह— लिङ्गमित्युच्यत इति ।। उक्तस्य सर्वस्य संपिण्डितस्य विज्ञानशक्तिप्राधान्येन हिरण्यगर्भसंज्ञां दर्शयति—अपञ्चीकृतेति ।। तस्यात्मत्वं निराकर्तुमात्मसंबन्धं साधयते— एतत्सूक्ष्मशरीरमिति ।। पञ्चीकृतेषु भूतेषु प्रमाणप्रदर्शनपूर्वकं हिरण्यगर्भद्वारेण

पञ्चप्रक्रियाव्याख्या

तेभ्य इति ॥ तस्य कथं सप्तदशकत्वमित्यत्राह—वागित्यादिना ॥ [मनो]बुद्ध्योः स्वरूपं दर्शयति— संशयेति ॥ तर्ह्यन्तःकरणस्य द्वैविध्यापत्तिः[त्तेः] सप्तदश[सप्तदशकत्व]प्रसिद्धिविरोध इत्यत्राह— इत्येकमेवेति ॥ तत्र हेतुः—क्रियेति ॥ उक्तस्य सर्वस्य हिरण्यगर्भात्मकतामाह—अपञ्चीकृतेति ॥ तस्यात्मत्वाशङ्कां वारयति—एतदिति ॥ हिरण्यगर्भोद्भवमभिधाय विराडुद्भवमुपपादयितुं प्रथमम्, अपञ्चीकृतमिति विशेषणमनुपपन्नम्, पञ्चीकृतापेक्षत्वात्तस्य; तत्र च प्रमाणाभावादित्याशङ्क्य

१. G. भेदात्
२. G. तत्कार्यसप्त-
३. TM omits सप्त...व्यापत्तिः
४. G omits मनो
५. TM. सर्वसिद्धि

## पञ्चप्रक्रिया

त्रिवृत्करणश्रुतिसिद्धानि पञ्चीकृतमहाभूतानि । तेभ्य उत्पन्नमधिदैवं ब्रह्माण्डम्; अध्यात्मं अधिभूतं च करशिरश्चरणादिमल्लोकप्रसिद्धं स्थूलशरीरजातम् । एतानि पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च ब्रह्माण्डं प्राणिनां स्थूलशरीरजातं च सर्वं विराडित्युच्यते । एतत्स्थूलशरीरमात्मनः । एकमेव स्थूलशरीरं विराडाख्यम्; एकमेव सूक्ष्मशरीरं हिरण्यगर्भाख्यम्; एक एव शरीरद्वयाभिमानी

## पञ्चप्रक्रियाटीका

विराडात्मोत्पत्तिं सूचयति—त्रिवृत्करणेति ।। यथा हि भूतत्रयोत्पत्तिश्रुतिः भूतपञ्चकोत्पत्तिपरा परिगृहीता, तथा त्रिवृत्करणश्रुतिरपि पञ्चीकृतभूतपञ्चकविषयेष्यते, अन्यथा शरीरादौ भूतव्यवहारवद्भूतद्वयव्यवहारविरहप्रसङ्गात्, अतः "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्यादिश्रुतिसिद्धानि यथोक्तानि भूतानीत्यर्थः । तेभ्यः समुदितेभ्यो ब्रह्माण्डस्य विराडात्मकस्य जन्म व्यपदिशति—तेभ्य इति ।। अधिदैवमिति ।। अनवच्छिन्नसमष्ट्यात्मकमग्न्यादित्याद्यवयवमित्यर्थः । विराजो यत्कार्यं तदाह — अध्यात्ममिति ।। अस्मदादीनां व्याघ्रादीनां च शरीरजातं स्थूलं लोकप्रसिद्धं करचरणादियुक्तमुभयथा व्यपदेशभाग्भवतीत्यर्थः । उक्तस्य सर्वस्य स्थूलप्रपञ्चजातस्य पिण्डीभूतस्य संज्ञां निवेशयति— एतानीति ।। तस्य पूर्ववदात्मसंबन्धमात्मत्वव्यावृत्त्यर्थमाह —एतदिति ।। प्राणिनां स्थूलशरीरेषु अवान्तरभेदवद्विराजि हिरण्यगर्भे वा न प्रत्येकमवान्तरभेदोऽस्तीत्याह—एकमेवेति ।। ननु विराजि एको जीवात्मा हिरण्यगर्भे चापरः शरीरभेदे जीवभेदप्रसिद्धेरन्यथा व्यवस्थानुपपत्तेरित्याशङ्क्याह—एक एवेति ।। एकस्यापि जीवस्य अतीतानागत-

## पञ्चप्रक्रियाव्याख्या

पञ्चीकृतेषु प्रमाणमाह–त्रिवृत्करणेति ॥ भूतत्रयसर्गश्रुतौ भूतपञ्चकस्वर्गस्वीकारवत् "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि"इत्यादिका त्रिवृत्करणश्रुतिः पञ्चीकृतानि भूतानीत्युपदर्शयतीत्यर्थः । विराडुद्भवमुद्भावयति–"तेभ्यः"इत्यादिना "सर्वं विराडुच्यते"इत्यन्तेन ग्रन्थेन । तस्य आत्मत्वशङ्कां शातयति—एतदिति ॥ अस्मदादिस्थूलशरीरवद् विराड्ढिरण्यगर्भयोः अवान्तरभेदो नास्तीत्याह—एकमेवेति ॥ मा नाम भूतयोरवान्तरभेदः; तथापि शरीरद्वये जीवभेद इत्यत्राह—

१. G. महाभूतं
२. G omits लोक
३. G omits स्थूल

पञ्चप्रक्रिया

जीवः त्वंपदार्थः; सच्छब्दवाच्यं ब्रह्मैव शरीरद्वयानुप्रविष्टं जलसूर्यवद् घटाकाशवच्च प्राणधारणक्रियायोगाज् जीव इत्युच्यते । स च जीवः जाग्रत्-स्वप्नसुषुप्तिसाक्षी जाग्रत्स्वप्नसुषुप्तिव्यतिरिक्तो निर्गुणो निरवयवो निस्सङ्गो

पञ्चप्रक्रियाटीका

शरीरभेदसंभवात् न तद्भेदो जीवभेदमाक्षिपति; व्यवस्थापि देहभेदादविरुद्धेत्यर्थः । यस्य शरीरद्वयमुक्तं स त्वंपदेनोच्यत इत्याह—त्वंपदार्थ इति ॥ उक्तयोः तत्त्वंपद-वाच्ययोः वास्तवे भेदे वाक्यार्थानुपपत्तिरित्याशङ्क्य दूषयति — सच्छब्देति ॥ शरीरद्वयानुप्रविष्टं जीव इत्युच्यते इति संबन्धः । तथा च वाच्ययोः वस्तुतो भेदा-भावात् नोक्तानुपपत्तिरित्यर्थः । "तत्सृष्ट्वा । तदेवानुप्राविशत् ।" इत्यादिश्रुतिसिद्धे प्रवेशे प्रतिबिम्बपक्षम्, अवच्छेदपक्षं त्वा[चा]श्रित्य दृष्टान्तद्वयमाचष्टे-जलेत्यादिना॥ शरीरद्वयानुप्रविष्टे ब्रह्मणि जीवशब्दप्रवृत्तौ निमित्तमाह—प्राणधारणेति ॥ तत्त्वं-पदवाच्यार्थावपीत्थमुक्त्वा पदद्वयलक्ष्यावर्थावनूद्य तयोरैक्यं वाक्यार्थं कथयति—स चेत्यादिना ॥ जागरितादीनां जडत्वात् अन्तरेण साधकमसिद्धेः साधकान्तरस्य चाभावात् तेषामेव सन्निधिमात्रेण साधको भवतीत्यर्थः । तत्साक्षित्वे ततो व्यतिरेकः सिद्ध्यतीत्याह—जाग्रदिति ॥ न हि तेष्वन्तर्गतस्य तत्साक्षित्वं संगच्छते । तत्सा-क्षित्वं च तस्योक्तम् । तेन तस्मिन्नारोपितं जागरितादित्रितयमित्यर्थः । त्वंपदार्थस्य साक्षिणो लक्ष्यस्य शुद्धं स्वरूपं त्रिभिर्विशेषणैर्व्यपदिशति — निर्गुण इति ॥

पञ्चप्रक्रियाव्याख्या

एक एवेति ॥ एवं तत्त्वंपदवाच्यार्थौ प्रदर्शितौ । संप्रति तयोर्भिन्नत्वात् एकत्वज्ञानानुपपत्तिरित्या-शङ्क्य निराचष्टे—सच्छब्दवाच्यमिति ॥ प्रतिबिम्बपक्षमवच्छेदपक्षं चावलम्ब्य दृष्टान्तद्वयं दर्शयति—जलेति ॥ वाच्यार्थावावेद्याशङ्कान्तरं च निराकृत्य त्वंपदलक्ष्यमर्थं तत्पदलक्ष्यार्थ-पर्यन्तं शोधयति—स चेत्यादिना ॥ ननु जीवस्यावस्थात्रयेऽव्यवस्थानात् कथं तद्व्यतिरिक्तत्वम्,

१. TM. स च शब्द
२. G omits जीवः
३. TM. लक्षणार्थपर्यन्तं
४. G. प्युपस्थानात्

## पञ्चप्रक्रिया

नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयस्वभावः परमात्मैव त्रिष्वपि कालेषु सन्नप्यन्तःकरणसन्निधानाज् जाग्रत्स्वप्नसुषुप्तीरन्तःकरणावस्थाः क्रियाकारकफलानि चाविकृतः पश्यति । इन्द्रियैरर्थोपलब्धिर्जागरितं स्थूलकर्मनिर्मितम्; करणेषूपसंहृतेषु जागरितसंस्कारजः क्षुद्रकर्मनिमित्तो वासनारूप-

## पञ्चप्रक्रियाटीका

त्वंपदलक्ष्यमर्थमेवमुक्त्वा तत्पदलक्ष्यमर्थं निक्षिपति—नित्येत्यादिना ॥ ननु परस्यात्मनो मोक्षदशायामुक्तविशेषणवत्त्वेऽपि संसारदशायां एवंविध[नैवंविधत्व]मपरथा संसारविरोधादित्याशङ्क्य स्वभावपदम् । न चैवं संसारानुपपत्तिः, अविद्यया तदुपपत्तेरिति भावः । तयोरैक्यं वाक्यार्थं विवक्षित्वा अवधारणं प्रयुक्तम् । जीवस्य सर्वदा परमात्ममात्रत्वे विक्रियाभावात् कुतोऽवस्थात्रयदर्शनम्, कुतश्च क्रियाकारफलोपलब्धिरित्याशङ्क्याह—त्रिष्वपीति ॥ यद्यपि जीवः सदा परमात्मैव, तथापि यः[सः]स्वगतविकारमन्तरेणोपाधिवशादवस्थायां[स्थात्रयं] तदन्तस्थं क्रियाकारकादि च साक्षित्वादनुभवतीत्य[त्यर्थः । किं तदवस्थात्रयमित्य]पेक्षायां जागरितं लक्षयति – इन्द्रियैरिति ॥ स्वप्नं व्यवच्छेत्तुमाद्यं विशेषणम्; निरालम्बनज्ञानवादं निरसितुं अर्थपदम्, सुषुप्तिव्यावृत्त्यर्थं च । तस्य निमित्तं निवेदयति—स्थूलेति ॥ [स्थूलं शरीरम् ।] तस्य कर्म शुभाशुभव्यामिश्ररूपा चेष्टा । तन्निमित्तं जागरितम् । अथ वा स्थूलशरीरं कर्म च धर्माधर्माख्यम्; तदुभयं निमित्तीकृत्य एतद्बुद्धौ भवतीत्यर्थः । स्वप्नं लक्षयति – करणेष्विति ॥ सुषुप्तिं व्यावर्तयितुं हस्त्यादिविषय इति विशेषणम् । जागरितं व्यावर्तयति—वासनारूपेति ॥ तदुत्पत्तौ दृष्टादृष्टात्मकनिमित्तद्वयमाह —जागरितेत्यादिना ॥ क्षुद्रं शरीरम्; सूक्ष्मो देहः; तस्य कर्म

## पञ्चप्रक्रियाव्याख्या

कथं चाधिकारिणः साक्षित्वमित्यत्राह—त्रिष्वपीति ॥ किं तदवस्थात्रयमिति वीक्षायां जागरितं तावदाह—इन्द्रियैरिति ॥ स्वप्नसुषुप्त्योर्व्यभिचारवारणार्थं इन्द्रियार्थशब्दौ । धर्माधर्मलक्षणं कर्म तत्कारणमित्याह—स्थूलेति ॥ स्वप्नं लक्षयति—करणेष्विति ॥ सुषुप्तावव्यभिचारार्थं हस्त्यादिविषय इत्यवादि । जागरितं वारयितुम्—वासनारूपेति ॥ सुषुप्तिलक्षणं कथयति—स्थूलेति ॥

१. TM adds च
२. TM. राशा
३. The original omits the words within brackets.
४. TM. वीक्षया
५. TM. कारणेषु

पञ्चप्रक्रिया

इत्यादिविषयः स्वप्नः; स्थूलक्षुद्रकर्मद्वयोपरमे तत्कृतजाग्रत्स्वप्नद्वयोपरमाद् वटकणिकायामिव वटवृक्षस्यान्तःकरणस्य सच्छब्दवाच्ये मायाविनि ब्रह्मणि शबले कारणात्मनावस्थानं सुषुप्तिः । एवमेतानि जाग्रदादिस्थानानि जीवः क्रमतोऽक्रमतश्च पश्यति । एवमवधार्य पूर्वं समाध्यारम्भकाले मुमुक्षुः पश्चा-

पञ्चप्रक्रियाटीका

चेष्टारूपम्; पूर्वोक्तं वा धर्मादि; तन्निमित्तस्वप्नादि इति यावत् । प्रथमं विशेषणं स्वरूपनिर्देशार्थम् । तेजसो भास्वरं शुक्लं रूपमिति यावत् । अथवा वासनारूपविशेषणमुपेक्ष्य जागरितं व्यवच्छेत्तुमाद्यं विशेषणम् । सुषुप्तिं निरूपयति—स्थूलेति ।। देहद्वयस्य तद्गतस्य वा तदधीनस्य वा कर्मद्वयस्य चोपरमे सति हेतुभा[त्वभा]वे फलाभावन्यायेन यथोक्तनिमित्ताधीनावस्थाद्वयाभावादन्तःकरणस्य कारणात्मनावस्थानं सुषुप्तिर्भवतीति संबन्धः । यदि हि कारणात्मना तस्यावस्थानम्, किमिति तर्हि नोपलभ्यते? तत्राह—पटाणि[वटकणि]कायामिति ।। वटवृक्षस्य प्रागपि जन्मनो वटबीजेऽवस्थानमास्थि[मास्थि]तम्, असतो नरविषाणस्येव जन्मायोगात्; तथापि तस्य उपलम्भो नास्ति; तथा प्रकृतेऽपीत्यर्थः । किं तत्कारणं यदात्मना बुद्धेरवस्थानमित्याशङ्क्य कारणं विशिनष्टि—सच्छब्देत्यादिना ।। तस्मिन् सति तदात्मनेति योजना । जीवस्य केन क्रमेण यथोक्तावस्थात्रयप्राप्तिरित्याशङ्क्याह —एवमिति ।। तत्त्वंशब्दयोः वाच्यौ लक्ष्यौ चार्थौ एवं निश्चित्य लक्ष्ययोरर्थयोरेकत्वं च निर्धार्य, आत्मन्यवस्थात्रयं कल्पितमेव, वस्तुतस्तु नात्मनस्तत्संबन्धोऽस्तीत्यवगम्य, यथोक्तैकत्वज्ञानदृढीकरणार्थं समाध्यारम्भकाले पूर्वोक्तं स पूर्वमेव कृत्वा मुमुक्षुस्सन् अन्तःकरणं विषयेभ्योऽपच्छिद्य प्रत्यक्प्रवणमापाद्य तन्निष्ठत्वेन तस्मिन्निश्चले जाते प्रसंख्यानं कुर्यादित्याह—एवमिति ।। आदिना क्षेत्रप्रविलापनवत् क्षेत्रज्ञस्यापि प्रवि-

पञ्चप्रक्रियाव्याख्या

केन क्रमेणावस्थात्रयप्राप्तिरित्यत्राह—एवमिति ॥ एवं तत्त्वंपदवाच्यौ लक्ष्यौ चार्थावुक्तौ । त्वंपदार्थपरिशोधनप्रसङ्गेन अवस्थात्रयमप्यवादि । संप्रति पूर्वप्रकरणप्रतिपादितवाक्यार्थज्ञानस्य फलं प्रदर्शयितुं प्रसंख्यानं प्रणेतव्यमित्याह—एवमित्यादिना ॥ ननु सर्वमेव प्रविलाप्यम्; किं

## पञ्चप्रक्रिया

विश्वले ऽन्तःकरणे जाते क्षेत्रजातं सर्वं क्रमेण प्रविलापयेत्, क्षेत्रज्ञं च परिशेषयेत्। पञ्चीकृतपञ्चमहाभूतेभ्यो यदुत्पन्नमण्डादि तत्सर्वं पञ्चीकृतपञ्चमहाभूतव्यतिरेकेण नास्ति, यथा मृदुत्पन्नो घटो मृद्व्यतिरेकेण नास्ति, तत्कार्यत्वात्। एवं पञ्चीकृतपञ्चमहाभूतानि अपञ्चीकृतपञ्चमहाभूतव्यतिरेकेण न सन्ति। इदानीं हिरण्यगर्भमात्रसूक्ष्मशरीरमात्रं परिशिष्टम्। तत्रापि सप्तदशकं लिङ्गमपञ्चीकृतपञ्चमहाभूतव्यतिरेकेण नास्ति, यथा मृदुत्पन्नो घटो मृद्व्यतिरेकेण नास्ति, तत्कार्यत्वात्। इदानीमपञ्चीकृतपञ्चमहाभूतानि परिशि-

## पञ्चप्रक्रियाटीका

लापनमाशङ्क्य परिहरति—क्षेत्रज्ञं चेति ॥ सर्वं क्षेत्रजातं क्रमेण प्रविलापयेदित्युक्तम्। तत्र महाभूतादिधृत्यन्तमुपेत्य तमेव क्रममनुक्रामन् पञ्चीकृतमहाभूतकार्यस्याण्डादेः तद्व्यतिरेकेणासत्त्वं दर्शयति—पञ्चीकृतेति ॥ अण्डादीत्यादिशब्देन अध्यात्ममधिभूतं च गृह्येते। कार्यं कारणातिरेकेण नास्तीत्यत्र दृष्टान्तमाह—यथेति ॥ पञ्चीकृतभूतकार्ये दर्शितन्यायमपञ्चीकृतभूतेष्वतिदिशति—एवमिति ॥ पञ्चीकृतमहाभूतानामपञ्चीकृतमहाभूतकार्यत्वात् तदतिरेकेणासत्त्वं युक्तमित्यर्थः। स्थूलप्रपञ्चप्रविलापनानन्तरं परिशिष्टमर्थमाचष्टे — इदानीमिति ॥ सूक्ष्मशरीरे प्रविलयक्रमं प्रदर्शयन् अपञ्चीकृतेषु महाभूतेषु सप्त[सद]शकस्य लिङ्गस्य प्रविलयं प्रकटयति–तत्रापीति॥अपञ्चीकृतमहाभूतकार्यत्वं[त्वात्] लिङ्गस्य तत्र प्रलयः संभवति, मृदीव घटस्येत्याह–तत्कार्यत्वादिति ॥ लिङ्गे प्रविलापिते तद्धेतूनां भूतानां परिशेषं दर्शयति—इदानीमिति ॥ अपञ्चीकृतानां भूतानाम् "विपर्ययेण तु क्रमः" इति न्यायेन

## पञ्चप्रक्रियाव्याख्या

क्षेत्रविशेषणेनेत्यत्राह—क्षेत्रज्ञं चेति ॥ लयप्रकारमेव प्रकटयन् पञ्चीकृतभूतकार्याण्डादेः तावल्लयमुपदर्शयति—पञ्चीकृतेति ॥ आदिशब्देन अध्यात्ममधिभूतं चाभिहितम्। कार्यं कारणव्यतिरेकेण नास्तीत्यत्र दृष्टान्तमाह—यथेति ॥ उक्तन्यायं पञ्चीकृतपञ्चमहाभूतेष्वतिदिशति—एव-

१. G. कृतं च महा

२. G. क्षेत्रज्ञत्वेति

### पञ्चप्रक्रिया

ष्टानि । तत्राप्यन्नशब्दवाच्या पृथिवी उदकव्यतिरेकेण नास्ति, उदकं तेजो-व्यतिरेकेण, तेजो वायुव्यतिरेकेण, वायुराकाशव्यतिरेकेण, आकाशः तच्छब्द-वाच्यमायाविब्रह्मव्यतिरेकेण; मायाऽपि शुद्धब्रह्मव्यतिरेकेण नास्ति । इदानीमन्तःकरणभावात् जाग्रत्स्वप्नसुषुप्तीनामभावे जीवत्ववर्जितप्रत्यगात्म-चैतन्यस्वभावो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयस्वभावं ब्रह्म तत्त्वंपदार्थौ परिशिष्टौ । तत्र "ब्रह्मैवाहमस्मि" "अहमेव ब्रह्म" इति तप्तपरशुग्रहणपर्यन्त-

### पञ्चप्रक्रियाटीका

उत्पत्तिविपरीतक्रमेण प्रविलापनक्रममुदाहरति — तत्रापीत्यादिना ॥ केचित्तु मायाया नित्यत्वमङ्गीकुर्वन्तः मायाविनो ब्रह्मणोऽपि लयो नास्तीत्यङ्गीकुर्वते; तान् प्रत्याह — मायावीति ॥ "भूयश्चान्ते विश्वमायानिवृत्तिः" "मायामेतां तरन्ति ते" "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायाम्" इत्यादौ मायायाः निवर्त्यत्वश्रवणात् मायाविनो ब्रह्मणोऽपि लयः संभवतीत्यर्थः । सूक्ष्मप्रपञ्चद्वय-निवृत्तौ अन्तःकरणाभावात् तद्विशेषस्यावस्थात्रयस्याभावे प्रत्यगात्मा जीवत्ववर्जितः चैतन्यस्वभावोऽवशिष्यते । ब्रह्म च नित्यशुद्धत्वादिलक्षणं परिशिष्यते । तदेवं तत्त्वं-पदार्थौ द्वौ परिशिष्टौ इत्याह—इदानीमित्यादिना ॥ परिशिष्टे पदार्थद्वये व्यति-हारेण तप्तपरशुग्रहणदृष्टान्तेन श्रुत्युपदिष्टेन एकत्वनिश्चयदृढतोपेतस्य लक्ष्यपदार्थै-करसं वाक्यादपरोक्षीकुर्वती तमोऽवश्यंभावीत्याह —तत्र ब्रह्मैवेत्यादिना ॥

### पञ्चप्रक्रियाव्याख्या

मिति ॥ स्थूलदेहप्रविलापं प्रकृतमप्रदर्श्य[3] सूक्ष्मदेहप्रविलापप्रकारं प्रदर्शयति–तत्रापीत्यादिना ॥ एवं सूक्ष्मदेहं प्रविलाप्य[4] मायाविब्रह्मणो निरवद्यब्रह्मवत्[5] प्रविलापाभावाशङ्कामपाकरोति[6]–मायावीति॥ "मायामेतां तरन्ति" इत्यादौ[7] मायानिवृत्तिश्रवणात् तद्वतो विनिवृत्तिरिति[8] भावः । लयस्वरूपं

१. G omits तेजो वायुव्यतिरेकेण
२. G. आनन्दावयवस्वभावं
३. G. प्रकृतयः प्रदर्श्य
४. TM. विलाप्य
५. G. ब्रह्म निरवधिब्रह्मवत्
६. G. पाशङ्कामपाकरोति
७. TM. इत्यादि
८. TM. तद्वतोऽपि निवृ-

### पञ्चप्रक्रिया

दार्ढ्योपेतो यस्तत्त्वमसिवाक्यार्थः करतलन्यस्तामलकवदनुभवपर्यन्तेन ज्ञानेन जानाति स मुच्यत एव, "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरम्" इति श्रुतेः ॥

## इति तत्त्वंपदार्थव्याख्यानं समाप्तम्

### पञ्चप्रक्रियाटीका

वाक्यार्थं वाक्यार्थज्ञानेन[वाक्येन] जानाति चेत् तावतैव फलसिद्धेः अलं साक्षात्कारेण इत्याशङ्क्य अपरोक्षभ्रमश्च[मस्य] अपरोक्षज्ञानमन्तरेण निवृत्त्यनुपपत्तेः साक्षात्कारस्य अनुसरणीयतेत्याह—करतलेति ॥ यथोक्तज्ञानवतो जीवन्मुक्तिद्वारा विदेहकैवल्य-मावश्यकमित्यत्र पूर्वोदाहृतामेव श्रुतिमनुस्मारयति - आचार्यवानिति ॥

### पञ्चप्रक्रियाव्याख्या

निरूप्य परिशिष्टं निगमयति—इदानीमिति ॥ पदार्थद्वयपरिशोषणानन्तरं वाक्यार्थज्ञानं व्यति-हाररूपमनूद्य तत्फलं दर्शयति—तत्र ब्रह्मैवेत्यादिना ॥ तत्र प्रमाणमाह—आचार्यवानिति ॥

---

# ॥ चतुर्थं प्रकरणम् ॥

## [अवान्तरवाक्यार्थव्याख्यानम्]

पञ्चप्रक्रिया

सत्यानन्दादिरूपाय सर्वलोकैकसाक्षिणे ।
नमो वेदान्तवेद्याय गुरवे भेदभेदिने ॥

अथातोऽवान्तरवाक्यार्थं व्याख्यास्यामः, विधिवदुपसन्नाय नित्या-

पञ्चप्रक्रियाटीका

तत्त्वंपदार्थावित्थं व्याख्यायाप[यावान्त]रवाक्यार्थं व्याख्यास्यन् आदौ विशिष्ट-गुणसंकीर्तनद्वारा परापर[परदेवतारूप]गुरुं नमस्करोति—सत्यानन्दादीति ॥ उक्ते देवतास्वरूपे प्रमाणमाह-वेदान्तेति ॥ तत्र पादत्रयेण परदेवता नमस्क्रियते; चतुर्थेन तु पादेन गुरोर्वैशिष्ट्यानुशिष्टिपूर्वं नमस्क्रियेति विवेक्तव्यम् । संप्रत्युद्देश्यं दर्शयति—अथेति ॥ महावाक्यनिविष्टतत्त्वंपदयोरर्थद्वयनिरूपणानन्तरं तद्विषयज्ञानदार्ढ्यस्या-वान्तरवाक्यव्याख्यानमन्तरेणायोगाद् वेदान्तगतमहावाक्यापेक्षितावान्तरवाक्यार्थं स्पष्टं कथयिष्यामः, यतः संशयादेरनवकाशत्वमित्यर्थः । सत्यज्ञानादिवाक्यस्य वा विज्ञानमयादिवाक्यस्य वार्थो यस्मै कस्मैचिन्न वक्तव्यः; किन्त्वधिकारिणे विशिष्टायेति ब्रुवन् अधिकारिणो गुरूपगमनं विशेषणमुपन्यस्यति-विधिवदिति ॥ "समित्पाणिः"

पञ्चप्रक्रियाव्याख्या

महावाक्यार्थावगतिशेषत्वेन तत्त्वंपदार्थौ व्याख्याय अनन्तरं पूर्वोदितमहावाक्यार्थप्रकट-नार्थमवान्तरवाक्यव्याख्यानार्थं च प्रकरणान्तरं प्रारिप्सुः परदेवतारूपेण गुरुनमस्कारलक्षण-मङ्गलाचरणं करोति—सत्यानन्दादिरूपायेति ॥ तत्त्वंपदार्थव्याख्यानस्य महावाक्यार्थव्याख्या-नार्थत्वात्, तद्व्याख्यानानन्तरं महावाक्यार्थव्याख्यानं प्रतिजानीते—अथेति ॥ विशिष्टाधिकारिण एव महावाक्यार्थो व्याख्येयः, न तु यस्मै कस्मैचिदित्याह—विधिवदित्यादिना ॥ ब्राह्मणस्यैव

१. TM. तन्महा
२. G omits प्रकटनार्थं
३. G. लक्षणं
४. G. तस्यैव

## पञ्चप्रक्रिया

नित्यवंस्तुविवेकादिसाधनचतुष्टयसंपन्नाय ब्राह्मणाय श्रवणमननिदिध्यासनादिविधिप्रेरिताय यतये मुख्याधिकारिणे ; अन्येषां श्रवणादिविधिप्रेरणमन्तरेण प्रतिषेधाभावमात्रेण अधिकारित्वादेवामुख्यत्वात् ॥

## पञ्चप्रक्रियाटीका

इति श्रुतेः "रिक्तहस्तस्तु नोपेयात्" इति स्मृतेश्च योग्योपहारवता विनयादिगुणवताचार्योपसदनं कर्तव्यमित्यर्थः । तस्यैव विवेकवैराग्यशमदमादिसा[साधनसंप]न्मुमुक्षुत्वलक्षणं विशेषणान्तरमाह–नित्यानित्येति ॥ ब्राह्मणस्यैव पारिव्राज्यपूर्वके तत्त्वपरिज्ञाने मुख्योऽधिकारः; गौणमधिकारित्वमितरेषामिति मन्वानो विशिनष्टि—ब्राह्मणायेति ॥ यथोक्तस्याधिकारिणो मुमुक्षोः मोक्षसाधने वैधी प्रवृत्तिः न यादृच्छिकीति सूचयति—श्रवणेति ॥ दर्शितविशेषणविकलानामपि संप्रतिपन्नानां केषांचिदुपलभ्यते ज्ञाने प्रवृत्तिरित्याशङ्क्य फलविकला तेषां प्रवृत्तिरित्याभिप्रेत्याह—मुख्यायेतिनर[मुख्याधिकारिण इति] ॥ त्रैवर्णिकाधिकारनियममपाकृत्य देवादीनामिव स्त्रीशूद्रादीनामपि ब्रह्मविद्याधिकारो निरूपितः; तत्कथं ब्राह्मणविशेषणमित्याशङ्क्य इतरेषां अधिकारित्वमित्युक्तं व्यक्तीकरोति — अन्येषामिति ॥ अमुख्यत्वादुक्तविशेषणवतो ब्राह्मणस्यैव मुख्याधिकारित्वमिति शेषः ॥

महावाक्यापेक्षितावान्तरवाक्यव्याख्याने विशिष्टमधिकारिणं प्रति प्रस्तुते सति अवान्तरवाक्यार्थबुभुत्सायां तत्त्वंपदलक्ष्यार्थद्वयमेव तदर्थत्वेन प्रतिपत्तव्यमित्याह—

## पञ्चप्रक्रियाव्याख्या

सर्वकर्मसंन्यासपूर्वकं ब्रह्मात्मावबोधेऽधिकारितेति दर्शयितुं ब्राह्मणायेत्यभाणि । ननु देवताधिकरणे देवादीनामपि ब्रह्मविद्यायामधिकारो निरधारि; तत्र कथमेवंविधस्यैवाधिकारित्वं ब्रह्मविज्ञाने दर्शितमित्याशङ्क्य अन्येषां गौणमधिकारित्वमित्याह—अन्येषामिति ॥

१. TM omits वस्तु
२. TM. प्रेरणां
३. G omits अन्येषां...त्वमिति

पञ्चप्रक्रिया

तत्रावान्तरवाक्यार्थस्तावद् ब्रह्मात्मैकत्वलक्षणमहावाक्यार्थान्वयितत्त्वं-पदार्थद्वयमेव। तत्र "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिनावान्तरवाक्येन साक्षाद् ब्रह्मपदार्थो निरूप्यते। अनृतजडपरिच्छिन्न-दुःखविरुद्धं वस्तु सत्यज्ञानानन्तादिशब्दैः ब्रह्मशब्दार्थत्वेन निवेद्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इति च। तथा हि—सत्यत्वात् नानृतं ब्रह्म; ज्ञानत्वात् न जडम्; अनन्तत्वात् न परिच्छिन्नम्;

पञ्चप्रक्रियाटीका

तत्रेति ॥ वाच्यमर्थद्वयं व्यवच्छिनत्ति—ब्रह्मात्मेति ॥ तत्त्वंपदार्थयोर्मध्ये तत्पदार्थ-विषयम्, अवान्तरवाक्यार्थयोर्मध्ये तत्पदार्थविषयमवतार्य तस्यार्थं तत्पद-लक्ष्यमर्थं प्रस्तौति —तत्र सत्यमिति ॥ वाक्यार्थान्वययोग्यत्वं साक्षादित्युच्यते। वाक्यद्वये सत्यादिशब्दैः ब्रह्मपदार्थनिरूपणमेव प्रकटयति—अनृतेति ॥ सत्यादि-शब्दानामनृतादिविरुद्धे वस्तुनि प्रवृत्तिद्वारा ब्रह्मपर्यवसानं साधयति —तथा हीति ॥ व्यवहारभूमावनृते सत्यशब्दप्रयोगादर्शनात् ब्रह्मणि च तत्पद-प्रयोगात् न तदनृतं भवितुमलमित्याह—सत्यत्वादिति ॥ जडे ज्ञानपदप्रयोगानु-पलम्भात्, ब्रह्मणि च तत्पदप्रयोगान्न जडं युक्तमित्याह-ज्ञानत्वादिति ॥ परिच्छिन्ने वस्तुन्यनन्तशब्दप्रयोगादर्शनात्, ब्रह्मणि च तत्पदप्रयोगात्, न तत्परिच्छिन्न-मित्याह-अनन्तत्वादिति ॥ परिच्छिन्नमित्युक्ते कालतो देशतो वस्तुतो वा परिच्छे-

पञ्चप्रक्रियाव्याख्या

अवान्तरवाक्यार्थावगममन्तरेण महावाक्यार्थावगमायोगात्, कः[2] पुनरवान्तरवाक्यार्थ इत्या-[1]काङ्क्षायां तत्त्वंपदलक्ष्यार्थावित्याह—तत्रेति ॥ तत्र[3] तत्पदलक्ष्यविषयमवान्तरवाक्यं व्याकरोति—तत्र सत्यमिति ॥ ब्रह्मपदार्थनिरूपणप्रकारमेव प्रकटयति—अनृतेति ॥ "सत्यं ज्ञानमनन्तम्" "आनन्दो ब्रह्म" इति वाक्यद्वयाव[द्वय]गतसत्यादिशब्दैरनृतादिविरुद्धं वस्तु तत्त्वंपदार्थत्वेन[4] निवेद्यत इत्युक्तम्। एतदेव विशदयति-तथा हीत्यादिना। न परिच्छिन्नमित्युक्तम्। तत्र परिच्छिन्नशब्दस्य

१. G omits इत्यादि
२. TM omits कः
३. TM omits तत्र
४. G. तत्पदप्र...विषयं

पञ्चप्रक्रिया

भेदाभावत्रयाभ्यां विरुद्धमित्यर्थः । तथा आनन्दत्वात् निर्दुःखमिति च निवेद्यते । तस्यैव ब्रह्मणः तथानिवेद्यमानस्य आनन्त्योपपादनाय पञ्चविधानि युक्त्यर्थवादवाक्यानि विधिप्रतिषेधचोदनार्थशेषभूतस्तुतिनिन्दार्थ-

पञ्चप्रक्रियाटीका

द्राद्दित्यं विवक्षितमिति चोदितेति[दिते] त्रिधापीत्याह—भेदेति ॥ अभावत्रयं प्रागभावप्रध्वंसाभावान्योन्याभावलक्षणम् । आनन्दशब्दस्य ब्रह्मणि प्रवृत्तिं प्रकटयति—तथेति॥लोके दुःखवत्यानन्दशब्दस्य प्रयोगाप्रतीतेः ब्रह्मणि च तत्प्रतीतेः दुःखं[निर्दुःखं] तदेष्टव्यमित्यर्थः । सृष्ट्यादिवाक्यानां ब्रह्मप्रकरणपठितानां कथं ब्रह्मपदार्थे यथोक्ते समन्वयः स्यादित्याशङ्क्याह—तस्यैवेति ॥ तथा सत्यज्ञानानन्तानन्दात्मकत्वेनेति यावत् । आनन्त्यादिशब्देन सत्यत्वं गृह्यते । युक्तिरूपाण्यर्थवादवाक्यानि सृष्टिस्थिति-प्रलयप्रवेशनियमनवादिनाति[वादीनीति] संबन्धः । सृष्ट्यादिवाक्यानां ब्रह्मवाक्येनैकवाक्यत्वे दृष्टान्तमाह—विधीति ॥ "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादि

पञ्चप्रक्रियाव्याख्या

नञश्च विवक्षितार्थमाह—भेदेति ॥ भेदत्रयम्—देशतः कालतो वस्तुतश्च परिच्छेदात्मकम्; अभावत्रयम्—प्रागभावप्रध्वंसाभावान्योन्याभावलक्षणम् । आनन्दशब्दस्य ब्रह्मबोधनप्रकारं दर्शयति—तथेति ॥ ननु सत्यादिवाक्येन कथं ब्रह्म प्रतिपाद्यते? "यतो वै" इत्यादिना निवेद्यमानसृष्ट्यादिविषयत्वेन ब्रह्मणोऽनुवादादित्याशङ्क्य "ब्रह्मविदाप्नोति" इति ब्रह्मोपक्रम्य तत्प्रकरणपठितानां तच्छेषत्वमेव न्याय्यमित्याह—तस्यैवेत्यादिना ॥ तथानिवेद्यमानस्येत्येषोऽर्थः—सत्यज्ञानानन्तानन्दात्मकत्वेनेति । पञ्चविधानि युक्त्यर्थवादवाक्यानि सृष्टिस्थितिप्रलयप्रवेशनियमनादीनि तस्यैव ब्रह्मण आनन्त्याभ्युपपादनायेत्यन्वयः । सृष्ट्यादिवाक्यानां ब्रह्मवाक्यशेषत्वे दृष्टान्तमाह—विधीति ॥ "वायव्यं श्वेतमालभेत" इत्याद्या विधिचोदना; तच्छेषभूतम् "वायुर्वै क्षेपिष्ठा देवता" इत्यादि देवतास्तुतिवादकार्थवादवाक्यम् । "बर्हिषि रजतं न देयम्" इत्याद्या प्रतिषेधचोदना; तच्छेष-

१. G adds ब्रह्म
२. G. आवेद्यमानस्य
३. G omits नञश्च
४. G omits परिच्छेद...न्याभाव
५. TM. विशेषत्वेन

पञ्चप्रक्रिया

वादवाक्यवत् सृष्टिस्थितिप्रलयप्रवेशनियमनवादीनि । तत्र "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति[1] ।" इति सृष्टिस्थितिप्रलयवाक्यानि । "तत्सृष्ट्वा । तदेवानु प्राविशत्" इति प्रवेशवाक्यम् । "भीषास्माद्वातः पवते । भीषोदेति सूर्यः" इत्यादिनियमनवाक्यम् । एतैः पञ्चविधैः संभावनार्थवादवाक्यैः तज्जत्वात् तल्लत्वात् तदनत्वात् तत्प्रविष्टत्वात् तन्नियतत्वाच्च तत्तावन्मात्रं जगदिति युक्त्युपबृंहितैः[2] ब्रह्मण आनन्त्याद्युपपादने कृते ब्रह्मपदार्थो निश्चितो भवति ।

पञ्चप्रक्रियाटीका

[इत्यादिर्विधिचोदना । तच्छेषभूतम् "वायुर्वै क्षेपिष्ठा" इत्यादि देवतास्तुतिरर्थवादवाक्यम्; "बर्हिषि रजतं न देयम्" इत्यादिः प्रतिषेध]चोदना; तच्छेषभूतम् "सोरि[सोऽरोदीत्]" इत्यादि रजतनिन्दावाद्यर्थवादवाक्यम् । तथेमान्यपि यथा[यथादर्शित]ब्रह्मपदार्थप्रतिपादनशेषभूतान्येषितव्यानीत्यर्थः । उक्तमेव व्यक्तीकुर्वाणः सृष्ट्यादिवाक्यानि विभजते—तत्रेत्यादिना ॥ विभागेन प्रदर्शितानां वाक्यानां कथं ब्रह्मपदार्थनिश्चायकत्वमा[त्वमित्या]शङ्क्य युक्तिसहितानामेषां ब्रह्मविशेषणोपपादनद्वारेण तन्निश्चायकत्वमित्याह —एतैरिति ॥ ब्रह्मपदार्थस्य संभावनाहेतुत्वेन अर्थवादरूपाणि चेदेतानि, न तर्हि तैस्तन्निश्चयः सिध्यति; तत्राह—तद्ज्ञात्वातमिति [तज्जत्वादिति] ॥ तज्ज[तज्ज]त्वादयो युक्तयः; ताभिरुपबृंहितानि यथोक्तानि वाक्यानि; तयोः[तैः] ब्रह्मणो लक्षितस्यानन्त्यसत्यत्वस्वतन्त्रत्वादिप्रतिपादने सतीति

पञ्चप्रक्रियाव्याख्या

भूतम् "सोऽरोदीत्"इत्यादि स्तुति[रजत]निन्दावाद्यर्थवादवाक्यम् । कानि तानि सृष्ट्यादिविषयाणि वाक्यानीत्यत्राह—तत्रेति ॥ कथमेषां ब्रह्मपदार्थनिर्णयनिदानता इत्याशङ्क्याह एतैरिति ॥ तजत्वादियुक्त्युपबृंहितैर्ब्रह्मपदार्थसंभावनाहेतुभूतैर्ब्रह्मणो लक्ष्यस्य आनन्त्यसत्यत्वस्वतन्त्रत्वादि-

१. G omits इति  २. G. युक्त्युद्बृंहितैः

## पञ्चप्रक्रिया

ब्रह्मपदार्थगता ज्ञानविपर्यासा विनष्टा भवन्तीति[1] ब्रह्मपदार्थनिरूपणपरावान्तरवाक्यार्थव्याख्यानम् ॥

तथा[अथ] त्वंपदार्थनिरूपणपरावान्तरवाक्यार्थमपि दर्शयिष्यामः। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्यसोपाधिकात्मलक्षणकोशपञ्चकोपन्यासो निरुपाध्यात्मस्वरूपनिरूपणार्थम्[2], मूषानिषिक्तद्रुतताम्रादिप्रतिमावत्

## पञ्चप्रक्रियाटीका

यावत्। ब्रह्मपदार्थनिश्चयमेव व्याचष्टे—ब्रह्मपदार्थेति ॥ तत्पदार्थविषयावान्तरवाक्यार्थव्याख्यानमुपसंहरति — इति ब्रह्मपदार्थेति ॥

तत्पदार्थप्रतिपादकावान्तरवाक्यार्थव्याख्यानानन्तरं त्वंपदार्थप्रतिपादकावान्तरवाक्यार्थव्याख्यानमपि कर्तव्यमिति प्रतिज्ञां करोति — अथेति ॥ तत्र तैत्तिरीयके कार्यं कोशचतुष्टयम्; कारणं कोशान्तरम्; तच्च पञ्चकं सोपाधिकस्य त्वंपदलक्ष्यस्यात्म[त्मस्व]रूपस्य निरूपणार्थम्। तथा च तत्र कोशोपन्यासग्रन्थेन त्वंपदवाच्यार्थोक्तिद्वारा तल्लक्ष्योऽर्थो निरूपित इत्याह —अन्नमयेति ॥ तत्तदन्नमयादिनिर्देशस्य तत्र तत्र स्वार्थे पर्यवसानं किं न स्यादित्याशङ्क्याह—मूषेति ॥ यथा मूषायां निषिक्तं द्रुतं ताम्रादि समानाकारं तदभ्यन्तरमुपलभ्यते, तथान्नमयादि पूर्वपूर्व इत्यस्य[पूर्वपूर्वेण समानस्य] उत्तरस्य प्राणमयादेरिहोपन्यासादन्तरं सर्वस्मादात्मवस्तु

## पञ्चप्रक्रियाव्याख्या

प्रतिपादने कृते तन्निश्चयः स्यादित्यर्थः। किमिति तन्निश्चयः, तत्राह—ब्रह्मपदार्थेति ॥ तत्पदार्थविषयावान्तरवाक्यव्याख्यानं निगमयति—ब्रह्मपदार्थेति ॥

ब्रह्मपदार्थप्रतिपादकावान्तरवाक्यार्थो व्याख्यातः। संप्रति प्रत्यगात्मप्रतिपादकावान्तरवाक्यार्थव्याख्यानं प्रस्तौति— अथेति ॥ तैत्तिरीयके अन्नमयादिकोशपञ्चकोपन्यासग्रन्थेन आत्मपदाभिधेयार्थाभिधानद्वारेण लक्ष्यपदार्थोऽभ्यधायीत्याह—अन्नमयेति ॥ कथं तदुपन्यासस्य निरुपाध्यात्मनिरूपणपरतेत्यत आह—मूषेति ॥ मूषानिषिक्ततदन्तर्वर्तिद्रुतताम्रादिवदत्यन्तरस्या-

१. G. भवतीति
२. G. णार्थः
३. TM omits वाक्य
४. G omits अर्थ

पञ्चप्रक्रिया

पूर्वेणात्मना समानस्योत्तरात्मनोऽत्र कथ्यमानत्वात्; अन्यथा तदनुपयोगात्, इत्थं च उपयोगात्; न हि अमुख्यमर्थमनुपन्यस्य मुख्यस्यार्थस्य सौकर्येण प्रतिपादनं संभवति, अरुन्धतीकथनवत्; न हि स्थूलां तारकाममुख्यामरुन्धतीमनुक्त्वा तत्समीपवर्तिनी सूक्ष्मा मुख्यारुन्धती सौकर्येण निर्देष्टुं शक्यते; तद्वत् कोशपञ्चकमनुक्त्वा न मुख्य आत्मा वक्तुं शक्यत इति निरुपाध्या[पाधिका]त्मस्वरूपकथनार्थमेव सोपाधिकानां कोशात्मनां कथनम्, मुञ्जेषीकान्यायेन कोशपञ्चकादात्मनिष्कर्षोपपत्तेः। तथा च श्रुत्यन्तरम्—

पञ्चप्रक्रियाटीका

किञ्चिदत्राभिप्रेतं प्रतिभातीत्यर्थः। सर्वान्तरस्य मुख्यस्यात्मनोऽनभिप्रेतत्वे कोशपञ्चकोपन्यासवैयर्थ्यात् तस्यात्र विवक्षितत्वमेषितव्यमित्याह—अन्यथेति॥ तथाविधात्मविवक्षायामपि कथं कोशपञ्चकोपन्याससाफल्यमित्याशङ्क्याह— इत्थं चेति॥ तमेवोपयोगं व्यतिरेकद्वारेण विवृणोति—न हीति॥ अमुख्यार्थकथनस्य मुख्यार्थप्रतिपत्तिशेषत्वे दृष्टान्तमाह—अरुन्धतीति॥ दृष्टान्तं स्पष्टयति—न हीति॥ दार्ष्टान्तिकमाह—तद्वदिति॥ सोपाधिकात्मकथनं निरुपाधिकात्मप्रतिपत्त्यर्थमित्युपसंहरति—निरुपाधिकेति॥ कथं कोशपञ्चकोपन्यासस्य निरुपाध्यात्मसिद्ध्यर्थत्वं सिद्धवदुपन्यस्यते तत्राह—मुञ्जेति॥ देहादेः स्वात्मनः सकाशादात्मपदार्थस्य विवेकद्वारा मुञ्जे कोपं नि...ण्य[मुञ्जेषीकोपमं निष्कृष्य] निर्धारणे क[कठ]श्रुतिमनुकूलयति—तथा चेति॥ कथं पुरुषस्य पूर्णस्याङ्गुष्ठमात्रत्वमित्याशङ्क्य हृदया-

पञ्चप्रक्रियाव्याख्या

त्मनोऽविवक्षितत्वे दोषमाह—ना[अ]न्यथेति॥ एवंविधस्यात्मनो विवक्षितत्वे कथं कोशपञ्चकोपन्यासस्य सफलत्वमित्याशङ्क्याह—इत्थमिति॥ उक्तमेव व्यतिरेकद्वारेण व्यनक्ति—न हीति॥ कथममुख्यार्थोपन्यासो मुख्यार्थप्रतिपत्तिहेतुर्भवतीत्यत्र निदर्शनं दर्शयति— अरुन्धतीति॥ निदर्शनमेव स्फुटयति—न हीति॥ दार्ष्टान्तिकमाह—तद्वदिति॥ उपसंहरति—निरुपाधिकेति॥

१. TM adds निर्देष्टुं

२. G. तारमरुन्धतीं

३. G omits दोषमाह...विवक्षितत्वे

## पञ्चप्रक्रिया

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥"

इति । तस्मात्कोशपञ्चकाद्विलक्षणः प्रत्यगात्मा सर्वशरीरेष्वेको महावाक्यार्थान्वयी त्वंपदार्थ इति श्रुतौ कोशपञ्चकोपन्यासस्य तात्पर्यम् । तथा जाग्रत्स्वप्नसुषुप्तिविलक्षणो जाग्रत्स्वप्नसुषुप्तिसंबन्धरहितोऽध्यात्माधिभूताधिदैवशरीरस्थ एकस्त्वंपदार्थः, अवस्थात्रयस्य व्यभिचारित्वात्; आत्मनश्चावस्थात्रयानुयायिनोऽव्यभिचारित्वात्; व्यभिचारिणां च सर्पदण्डधाराभूच्छिद्रबलीवर्दमूत्रितत्वादिवन्मिथ्यात्वात्; अव्यभिचारिणश्चात्मनो रज्ज्वदमंशवत् सत्यत्वादिति । तस्य "त्रय आवसथाः त्रयः स्वप्नाः" इत्यादिश्रुतौ अवस्था-

## पञ्चप्रक्रियाटीका

वच्छेदादित्याह—सदेति ॥ कथं तर्हि शरीरायतनहृदयप्रदेशस्थितबुद्ध्यवच्छिन्नस्य पूर्णत्वसिद्धिरित्याशङ्क्याह —तमिति ॥ स्वाच्छरीरात् स्वकीयत्वेन कल्पितात् कार्यकारणसंघात्प्रवृ......पृथक्[संघातात् प्रवृहेत् पृथक्]कुर्यादिति यावत् । देहादेरात्मनो निष्कर्षोपायं विवेकमुपदिशति — धैर्येणेति ॥ तैत्तिरीयश्रुतौ कोशपञ्चकनिर्देशस्य पूर्वोक्तं तात्पर्यमुपपादितमुपसंहरति — तस्मादिति ॥ इदानीमैतरेयश्रुताववस्थात्रयकथनतात्पर्यमुक्तमुपसंहरति—तस्येति ॥ ननु पदार्थद्वयविषयावान्तरवाक्याभ्यां प्रत्येकं स्वार्थे पर्यवसिताभ्यां किमिति महावाक्यार्थान्वयित्वेन

## पञ्चप्रक्रियाव्याख्या

कथं तस्य निरुपाध्यात्मप्रतिपत्त्यर्थत्वमित्यत्राह—मुञ्जेति ॥ तत्र कठश्रुतिं प्रमाणयति-तथा चेति ॥ तैत्तिरीयकश्रुतौ कोशपञ्चकोपन्यासस्त्वंपदलक्ष्यप्रतिपादनपर इत्युपसंहरति — तस्मादिति ॥ ऐतरेयकश्रुतौ प्रत्यगात्मनिरूपणे तात्पर्यमवस्थात्रयोपन्यासस्य आत्मनिरूपणपुरस्सरं दर्शयति—तथेत्यादिना ॥ वैलक्षण्ये हेतुमाह—अवस्थात्रयस्येति ॥ अवस्थात्रयसंबन्धाभावे हेतुमाह—व्यभिचारिणां चेति ॥ आत्मन एकत्वे कारणमाह—अव्यभिचारिणश्चेति ॥ नन्ववस्थात्रय-

१. G. संस्थारहितः
२. Probably a few lines are missing in the original.

पञ्चप्रक्रिया

तयस्योपन्यासस्य तात्पर्यं स्वार्थे पुरुषार्थाभावात्, ब्रह्मात्मैकत्वज्ञाने च "ब्रह्मविदाप्नोति परम्" इति पुरुषार्थश्रवणात्, "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायात्। अतोऽसदनृतजडपरिच्छिन्नदुःखविरुद्धं यत् सत्यज्ञानानन्ता-

पञ्चप्रक्रियाटीका

स्वार्थः समर्प्यते ? अस्वतन्त्रत्वाभावे सत्यन्यशेषत्ववाचोयुक्तेरयुक्तत्वात् इति, तत्राह— ब्रह्मेति[स्वार्थ इति]॥ ब्रह्ममात्रस्य आत्ममात्रस्य च प्रत्येकं स्वभावेन ज्ञाने महावाक्यार्थ-शेषत्वमन्तरेण स्वतन्त्रे स्वीकृते फलाभावान्न तत्रैवावान्तरवाक्यद्वयं पर्यवस्यतीत्यर्थः। एकत्वज्ञानेऽपि फलाभावाविशेषात् कथमवान्तरवाक्यद्वयस्य महावाक्यशेषत्वमित्या-शङ्क्याह–ब्रह्मात्मेति॥ युक्तमवान्तरवाक्यानां तच्छेषत्वमिति शेषः। अथवा किमिति सत्यादिवाक्यस्य महावाक्यशेषत्वम्, विपरीतमेव शेषशेषित्वं किं न स्यादित्याशङ्क्याह– ब्रह्मैकत्वेति[स्वार्थ इति]॥ तद्ज्ञानं चेदस्वार्थं सत्यादिवाक्यार्थज्ञानशेषभूतमिष्यते, तदा शेषिणि फलाभावात् तच्छेषेऽपि तदसिद्धेः वाक्यद्वयमनर्थकमप्रमाणं स्यादित्यर्थः। एकत्वज्ञानस्य[ज्ञानं यदि] शेषिभूतमिष्यते तदा शेषिणि फलाभावात् तच्छेषेऽपि तद-सिद्धेर्वाक्यत्वेऽपि[महावाक्येऽपि] तुल्यमिदमित्याशङ्क्याह— ब्रह्मात्मैकत्वज्ञाने चेति॥ तस्मिन्नन्यशेषत्वमन्तरेण स्वार्थे स्वीकृते पुरुषार्थस्य श्रौतत्वात् तच्छेषत्वं सत्यादि-वाक्यस्य युक्तमित्यर्थः। तत्रैव मीमांसासंमतिमाह— फलवदिति॥ तत्पदलक्ष्यार्थं सत्यज्ञानादिवाक्यार्थं महावाक्यार्थान्वयिनमुपसंहरति— अत इति॥ तच्छब्देन

पञ्चप्रक्रियाव्याख्या

कथनस्य तत्रैव तात्पर्यमस्तु, मास्त्वात्मनि[1] इत्याशङ्क्याह—स्वार्थेति॥ ननु एकत्वज्ञानान्वयि-पदार्थनिरूपणद्वारैकत्वज्ञाने[2]ऽपि न तात्पर्यम्, प्रयोजनाभावादित्याशङ्क्याह—ब्रह्मात्मेति॥ भवतु पुरुषार्थश्रवणं तत्र; तथापि[3] किमिति तच्छेषत्वमित्यत आह—फलवदिति॥ "सत्यं ज्ञानम्" इत्याद्यवान्तरवाक्यार्थं तत्पदलक्ष्यं निगमयति—अत इति॥ कोशपञ्चकोपन्यासादि-

१. G. स्वात्मनि

२. TM adds एकत्वं

३. TM. तथावान्तरवाक्यार्थे तत्त्वमित्यत आह

## पञ्चप्रक्रिया

नन्दलक्षणं ब्रह्म तत् त्वमसि इति महावाक्ये तच्छब्देन स्ववाच्यशबलब्रह्मगतपारोक्ष्यांशपरित्यागेन लक्षयितव्यम् । यथोक्तश्च प्रत्यगात्मा त्वंशब्दवाच्यशबलगतसद्वितीयांशपरित्यागेन स्ववाच्यसद्वितीयत्वशबलत्वंपदार्था-भिधानद्वारेण त्वंशब्देन लक्षयितव्यः जहदजहल्लक्षणया; अन्यथा सद्वयम् अद्वयम्, प्रत्यक्षं परोक्षम्—इति तत्त्वमसिमहावाक्यार्थप्रतिपत्तौ विरोध-

## पञ्चप्रक्रियाटीका

लक्षयितव्यमिति संबन्धः । कथं लक्षणेत्यपेक्षायां विरुद्धांशपरिहारेणेत्याह—स्ववाच्येति ॥ तच्छब्दस्य वाच्यमविद्यया सह शबलत्वेन स्थितं ब्रह्म तद्गतस्य पारोक्ष्यलक्षणस्यांशस्य परित्यागेन सत्यज्ञानात्मकपरिपूर्णांशस्वीकारेणेति यावत् । त्वंपदस्यापि लक्ष्यमर्थं कोशपञ्चकोपन्यसाद्यवान्तरवाक्यार्थं निरुपाधिकं प्रत्यगात्मानं निगमयति—यथोक्तश्चेति ॥ 'प्रत्यगात्मा' 'त्वंशब्देन लक्षयितव्यः' इति संबन्धः । कथं तस्य लक्षणेति, तत्राह–त्वंशब्देति ॥ त्वंशब्देन वाच्यः सद्वितीयत्वविशिष्टो यः त्वंपदार्थः तस्योक्तिद्वारा त्वंशब्देन वाच्यं यत्प्रत्यक्चैतन्यं प्राणपिण्डशबलत्वेन स्थितम्, तत्र यः सद्वितीयत्वात्मकः अंशः तस्य परित्यागेन निरुपाधिकप्रत्यक्चैतन्यमात्रोपादानेन लक्षणेत्यर्थः । पदार्थद्वयं कीदृश्या लक्षणायाः लक्षयितव्यमिति तत्राह–जहदिति ॥ वाच्ययोरेव पदार्थयोरेकत्वबोधनसंभवे किमिति लक्षणापेक्ष्यते, तत्राह —अन्यथेति ॥ न तत्प्रतिपत्तिः संभवेदिति शेषः । पदार्थद्वये प्रागुक्तप्रकारेण लक्षिते

## पञ्चप्रक्रियाव्याख्या

लक्षणावान्तरवाक्यार्थत्वंपदलक्ष्यमुपसंहरति—यथोक्तश्चेति ॥ जहदजहल्लक्षणया तच्छब्देन ब्रह्म लक्षयितव्यम्; यथोक्तश्च प्रत्यगात्मा त्वंशब्देन लक्षयितव्य इत्यन्वयः । लक्षणानङ्गीकारेण वाच्ययोरेवैकत्वाभ्युपगमे दोषमाह—अन्यथेति ॥ पूर्वोक्तं वाक्यार्थबोधप्रकारं प्रपञ्चयति—

१. TM. आनन्दपञ्चलक्षणं
२. G. वाक्येन
३. TM. गत
४. TM adds भाग
५. TM. वाक्यार्थं

पञ्चप्रक्रिया

प्रसङ्गात् । एवं पदार्थद्वयं शोधयित्वा व्यवस्थितं तदेव "तत्त्वमसि" इत्याचार्यो बोधयति । "तत्त्वमसि" इत्यादिमहावाक्येन स च मुमुक्षुः यथोक्तं ब्रह्मैवाहम्, यथोक्तः प्रत्यगात्मा अहमेव[1], अहमेव च यथोक्तः प्रत्यगात्मा, तद्यथोक्तं परं ब्रह्म—इति व्यतिहारेण ब्रह्मात्मनोरेकत्वं दृढं प्रतिपद्यते । ततश्च संसाराद-चिरेण मुच्यते, "तस्य तावदेव चिरम्" इत्यादिश्रुतेः ॥

इत्यवान्तरवाक्यार्थव्याख्यानम्

पञ्चप्रक्रियाटीका

महावाक्यप्रवृत्तिरित्याह —एवमिति ॥ आचार्येण प्रतिबोधितस्य शिष्यस्य पदार्थ-परिशोधनपूर्वकं लक्षितपदार्थद्वयस्य विरोधस्फुरणाभाव[वात्] व्यतिरेके[व्यतिहारे]-णैकत्वप्रतिपत्तिः असंभावनादिरहिता भवतीत्याह—स चेति ॥ अहं यथोक्तो देहादेः निकृष्टः[निष्कृष्टः] स प्रत्यगात्मा; यथोक्तं सत्यज्ञानादिलक्षणं ब्रह्मैव, नान्यः तद्व्य-तिरेको[रिक्तो]ऽस्ति; ब्रह्म च यथोक्तमहमेव प्रत्यगात्मा नान्यदिति व्यतिहारः । अतिदृढैकत्वप्रतिपत्तिफलं सप्रमाणमुपन्यस्यति—ततश्चेति ॥

पञ्चप्रक्रियाव्याख्या

एवमिति ॥ आचार्योपदेशद्वारेण शिष्यस्य व्यतिहारेण प्रतिपत्तिप्रकारमाह—स[2] चेति ॥ एकत्वावबोधफलमाह—ततश्चेति ॥ तत्र मानं दर्शयति—तस्येति ॥

---

१. G omits अहमेव २. G. न चेति

# ॥ पञ्चमं प्रकरणम् ॥

[बन्धमोक्षविचारः]

—·—

**पञ्चप्रक्रिया**

स्वाज्ञानकल्पितजगत्परमेश्वरत्व-
जीवत्वभेदकलुषीकृतभूमभावा ।
स्वाभाविकस्वमहिमस्थितिरस्तमोहा
प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥

**पञ्चप्रक्रियाटीका**

महावाक्यार्थापेक्षितमवान्तरवाक्यार्थं पदार्थद्वयं व्याख्याय बन्धमोक्षविचारार्थं प्रकरणान्तरमवतार्य परदेवतातत्त्वानुस्मरणरूपं मङ्गलाचरणं संपादयति—स्वाज्ञानेति ॥ स्वस्य प्रत्यगात्मनः स्वात्मन्येवाज्ञानमनाद्यनिर्वाच्यत्वेन[स्वं तेन] कल्पितो [तो यः] जगत्परमेश्वरत्वजीवत्वभेदत्वेन[दः तेन] कलुषीकृतो विभागमापादितो भूमभावो महत्त्वमनवच्छिन्नत्वं यस्याः सा तथोक्ता । सा च प्रत्यग्भूता चितिः

**पञ्चप्रक्रियाव्याख्या**

पुरोदितमहावाक्यार्थप्रतिपादनपूर्वकं तदपेक्षितावान्तरवाक्यार्थं व्याख्याय इदानीं पुरोदितसकलशास्त्रार्थनिगमनार्थं बन्धमोक्षस्वरूपनिरूपणार्थं च प्रकरणान्तरमारभमाणः तत्प्रतिपाद्यार्थसंसूचनपुरस्सरं परदेवतास्मरणं मङ्गलमाचरति—स्वाज्ञानेति ॥ प्रत्यक्चितिः प्रत्यग्भूता चिद्विजयते । तां सोपाधिकरूपेण विशिनष्टि—भुवनेति ॥ भुवनस्य वियदादिद्वैतजातस्य एका स्वप्रधाना योनिर्निमित्तोपादानात्मकं कारणमित्यर्थः । ननु प्रत्यक्चितेः भुवनैकयोनित्वे कूटस्थत्वैकरसत्वहान्यादयो दोषा भवेयुरित्याशङ्क्योक्तम्—स्वाज्ञानकल्पितेति ॥ प्रत्यक्चैतन्याश्रयविषयमज्ञानं तत्परिकल्पितो यो जगत्परमेश्वरत्वं जीवत्वमित्येवंलक्षणो भेदः, तेन कलुषीकृतो विक्षिप्तो

१. TM. भूत
२. TM. महिमास्थितिः
३. TM. देवतानुसरणं
४. G. विनादि
५. G. योगिनिमित्त
६. TM. कूटस्थैकत्वहान्यादयः
७. TM. कल्मषी
८. G. निक्षिप्तः

### पञ्चप्रक्रिया

अविद्यावस्थायां तु साभासाज्ञानद्वारेण शुद्धस्यैव ब्रह्मणः प्रकृतिनिमित्तकारणत्वं ईश्वरत्वं साक्षित्वं च कार्यप्रपञ्चमीशितव्यजीवभेदं दृश्यं

### पञ्चप्रक्रियाटीका

स्वाज्ञानवशादेव भुवनस्य गगनादिप्रपञ्चस्यैका निरपेक्षा योनिरुपादानं निमित्तं चेति बन्धस्सूचितः । संप्रति मोक्षं सूचयति । स्वाभाविको हेतुमनपेक्ष्य सिद्धा स्वे महिम्नि स्थितिर्यस्याः सा प्रत्यक्चितिः अपाकृतमोहतत्कार्या सर्वापेक्षयोत्कर्षवती परमपुरुषार्थरूपा भवतीत्यर्थः ॥

श्लोकार्थमेव विवृण्वन् भुवनैकयोनिरित्युक्तं व्यक्तीकरोति —अविद्येति ॥ ब्रह्मणः शुद्धस्यैव अविद्यादशायां साभासाविद्याद्वारा द्विविधं कारणत्वम् । न हि तस्याशुद्धस्य कार्यकोटिनिविष्टस्य तद्देष्टुं शक्यम् । न च अविद्याद्वारमन्तरेण पुरुषस्य विशुद्धस्य अविशुद्धा विकृतिस्सेद्धुमर्हति । न चाभासव्याप्त्या विना अविद्याकार्येति । न च ब्रह्मणोऽन्यदुपादानं निमित्तमेव तु ब्रह्मेति युक्तम्, प्रतिज्ञादृष्टान्तश्रुतेः, अद्वैतश्रुतेश्चोपरोधप्रसङ्गादित्यर्थः । कारणत्ववत् ईश्वरत्वं साक्षित्वं च तस्यैव स्वीकर्तव्यमित्याह —ईश्वरत्वमिति ॥ तदिदं त्रितयमपि न स्वाभाविकम्, किन्तु "ईशादि तिविषयंतं[वसुधान्तं] यत्तदविद्याविजृम्भितम्" इति न्यायेन अविद्याकृतमिति प्रकटयन् प्रकृतत्रितयस्य क्रमेण सापेक्षत्वमाह—कार्यप्रपञ्चमिति ॥ शुद्धस्यैव

### पञ्चप्रक्रियाव्याख्या

भूमभावः अपरिच्छिन्नानन्दरूपत्वं यस्याः सा तथोक्ता । एवं पदद्वयेनाज्ञानस्याश्रयविषयभेदाभावो बन्धश्च सूचितः । स्वाभाविकस्वमहिमस्थितिरस्तमोहेत्याभ्यां मोक्षस्वस्वरूपं सूचयति । स्वाभाविकान्यानपेक्षा स्वे महिम्नि स्थितिः यस्याः सा तथोक्ता ॥

भुवनैकयोनित्वं विवृणोति—अविद्येति ॥ कार्यप्रपञ्चापेक्षया कारणत्वस्येवेश्वरत्वसाक्षित्वयोरपि ईशितव्यसाक्ष्यसंबन्धोपाधिकत्वेन सापेक्षत्वमेवाश्रयणीयमित्याह—ईश्वरत्वमिति ॥ तत्र पृथिव्या[प्रकृतीत्या]दीनां कार्यप्रपञ्चमित्यादिभिः यथाक्रमं संबन्धः । एतत्त्रयं शुद्धस्यैव ब्रह्मणः

१. TM. विक्यनपेक्षया
२. TM adds चोक्तं
३. G. पेक्षायाः कारणस्येव
४. TM. साक्षिसंबन्ध
५. TM. यथाप्रपञ्चं

पञ्चप्रक्रिया

चापेक्ष्य भवति ; यथा शुद्धस्यैव प्रत्यगात्मनस्साभासकार्यकरणसंबन्धद्वारेण नियोज्यत्वकर्तृत्वभोक्तृत्वप्रमातृत्वसंबन्धः, न कार्यकरणसंघातादिविशिष्टस्य, तद्वत् । तदुक्तम्—

पञ्चप्रक्रियाटीका

ब्रह्मणो यथोक्तं त्रितयं साभासाविद्याकृतमित्युक्तं दृष्टान्तेन स्पष्टयति-यथेत्यादिना ॥ न हि प्रत्यगात्मनः शुद्धस्यैवाविक्रियस्य यागे नियोगो ममेत्येवं स्वकीयत्वेन कार्यबोद्धृत्वात्मकं नियोज्यत्वं कार्यकरणसंघातमन्तरेण सिद्ध्यति । न च चिदाभासव्याप्त्या विना कार्यकरणानि प्रत्यगात्मनो नियोज्यत्वे प्रयोजकीभवितुमुत्सहन्ते । कर्तृत्वं क्रियायां गुणत्वम्, भोक्तृत्वं फलित्वेन प्रधानत्वम्, प्रमातृत्वं प्रमां प्रति कर्तृत्वम्, तैश्च प्रच[सं]बन्धः साभासकार्यकरणसंबन्धाद् भवति; न स्वतोऽविक्रियस्य तैस्सह संबन्धस्सेद्धुमर्हतीत्यर्थः । ननु शुद्धस्यैव प्रत्यगात्मनो नियोज्यत्वादिसंबन्धः साभासकार्यकरणसंबन्धद्वारेणेत्ययुक्तम्, कार्यकरणसंघातविशिष्टस्यैव तस्य नियोज्यत्वाद्यभ्युपगमादिति, तत्राह—न कार्यकरणेति ॥ विशिष्टस्य विशेषणभेदे भेदात् कर्तृत्वभोक्तृत्वादिषु वैयधिकरण्यादकृताभ्यागमकृतविप्रणाशप्रसङ्गादित्यर्थः । उक्तदृष्टान्तानुसारेण ब्रह्मणः शुद्धस्यैव साभासाविद्याद्वारकमीश्वरत्वादि त्रितयमिति दार्ष्टान्तिकमाह—तद्वदिति ॥ तस्य प्रत्यगात्मनो नियन्तव्यप्राणिभिश्शरीरादिसंबन्धनिबन्धनमविद्या विद्याङ्गमीश्वरत्वादित्यत्र वृद्धसंमतिमाह—तदुक्तमिति ॥ तस्य ईश्वरस्येति त...

पञ्चप्रक्रियाव्याख्या

साभासाविद्याविजृम्भितमिति दृष्टान्तेन विशदयति—यथेत्यादिना ॥ न हि चिदाभासव्याप्तिनिमित्तनियोज्यत्वोपेतकार्यकरणसङ्घातसंबन्धमन्तरेणाविक्रियस्य प्रत्यगात्मनो ममायं यागे नियोग इतिकर्तव्यबोद्धृत्वात्मकं नियोज्यत्वं संभवति । न च कार्यकरणसंबन्धं विना क्रियागुणत्वात्मकं कर्तृत्वं फलित्वेन प्रधानत्वलक्षणं भोक्तृत्वं प्रमां प्रति कर्तृत्वात्मकं प्रमातृत्वं वा संभवति । स्वतोऽविक्रियावानि[त्वादि]त्यर्थः । ईश्वरत्वादित्रितयं प्रत्यगात्मनोऽविद्याविलसितमित्यत्राभियुक्तसंमतिं दर्शयति—तदुक्तमिति ॥ ब्रह्मणः साभासाविद्याकृतमीश्वरत्वादिकमिति सिद्धे फलितमर्थं

१. TM. नापि दर्शयति
२. G. णापि क्रियस्य
३. TM. याग
४. G. कर्तृत्वबोद्धृ-
५. G omits त्वलक्षणं...प्रमातृत्वं
६. TM. रत्यादित्रितयं
७. G omits त्वादिकमिति...कोऽसौ

पञ्चप्रक्रिया

"ऐश्वर्यं कारणत्वं च साक्षित्वमपि चात्मनः ।
सदेशितव्यकार्यार्थसाक्ष्यार्थेनास्य संगतेः ।।" इति ।

तस्माद् ब्रह्मैव संसरति साभासस्वाविद्यया स्वविद्यया च ब्रह्मैव मुच्यते । संसारश्चास्य ब्रह्मणो जीवत्वेश्वरत्वजगद्भेदाश्रयत्वम्; तन्नाशे स्वरूपस्थितिः मोक्षः; "यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम्" इति श्रुतेः । ब्रह्मणश्च

पञ्चप्रक्रियाटीका

[अस्य ईश्वरस्य । ईशितव्ये]नार्थेनाभिसंगतेरैश्वर्यं तस्य तदपेक्षत्वात् कार्येण चार्थेनाभिसंगतेस्तस्य कारणत्वं कार्यसंबन्धाभावे कारणत्वायोगात् । तस्य च साक्ष्येणार्थेन संबन्धादेव साक्षित्वम् । न हि साक्ष्यासंबन्धे साक्षित्वं सिद्ध्यति । तथा चेदं त्रितयं सापेक्षत्वादविद्याकृतमित्यर्थः । ब्रह्मणोऽविद्याकृतमीश्वरत्वादीति स्थिते तस्यैवाविद्यया बन्धः, विद्यया मुक्तिरिति स्वसिद्धान्तसिद्धिरित्याह–तस्मादिति ।। ईदृशौ पुनर्ब्रह्मणो बन्धमोक्षाविति वक्तव्यम् । न हि ब्रह्म इदानीं बद्धमिति वा ततो विश्लेषो मुक्तिरिति वा प्रसिद्धिरस्तीति, तत्राह–संसारश्चेति ।। तत्र छान्दोग्यश्रुतिमुदाहरति–यो वै भूमेति ।। यदनवच्छिन्नं परमात्मरूपं तदमृतत्वं[तं] मरणादिबन्धवैधुर्यं[र्यात्] नित्यमुक्तम् । यत्पुनरल्पं तत्परिच्छिन्नं जीवेश्वरजगदात्मकं तन्मर्त्यं मरणात्मकं मरणधर्मकं बन्धरूपमित्यर्थः । ननु ब्रह्मणोऽद्वितीयानन्दात्मनो ज्ञानाज्ञानाश्रयत्व[त्वा]योगात् न तस्य बन्धमोक्षौ युज्येते; तथा च ब्रह्मणोऽन्यस्यैव ज्ञानाज्ञानयोगिनो बन्धमोक्षभाक्त्वं वक्तव्यमिति,

पञ्चप्रक्रियाव्याख्या

निगमयति—तस्मादिति त्वगादि [तस्मादित्यादि] ।। तत्र कोऽसौ संसारः को वा मोक्ष इत्याकाङ्क्षायामाह—संसारश्चेति ।। तत्राविद्यया संसरति विद्यया मुच्यते इति श्रुतिं प्रमाणयति—यो वै भूमेति ।। यदपरिच्छिन्नं परमानन्दरूपं तदमृतं म[अम]रणधर्मकं नित्यमुक्तम्; यत्पुनरल्पं परिच्छिन्नं जीवेश्वरजगल्लक्षणं संसारात्मकं तन्मर्त्यं मरणधर्मकं विनाशीत्यर्थः । ननु सत्यज्ञानानन्दात्मकं ब्रह्म अभिप्रेतम्; तथा च सति तस्य ज्ञानाज्ञानाश्रयत्वायोगात् बन्धमोक्षभागित्वासंभवात्

१. G omits स्ववि
२. G. जीवेश्वरत्व
३. G. श्रयत्वनाशे
४. G adds च
५. TM adds छान्दोग्ये ब्रह्मैव स्वा
६. TM. स्वविद्यया
७. TM adds छान्दोग्य

## पञ्चप्रक्रिया

प्रत्यग्रूपेणैव ज्ञानाज्ञानाश्रयत्वमुच्यते । अहमेतावन्तं कालं नाज्ञासिषमात्मानम्; इदानीमाचार्यप्रसादात् [इदानीं जानामीति][1] ज्ञानाज्ञानयोः प्रत्यगात्माश्रयत्वानुभवात् नाद्वयानन्दस्वरूपेण[2] ब्रह्मणो ज्ञानाज्ञानाश्रयत्वम्, अद्वयानन्दस्वरूपं ब्रह्म मूढमित्याद्यनुभवाभावात् । नापीश्वरस्य प्रतिबिम्बस्य ज्ञानाज्ञानाश्रयत्वम्, ईश्वरो मूढ[4] इत्याद्यनुभवाभावात् । ईश्वरस्य सर्वज्ञत्वश्रुतिस्मृतिलोकप्रसिद्धिविरोधाच्च । नापि जगतो ज्ञानाज्ञानाश्रयत्वम्, जडत्वप्रसिद्धेः । नापि जीवाख्यप्रति-

## पञ्चप्रक्रियाटीका

तत्राह-ब्रह्मणश्चेति[5]।। प्रत्यग्रूपेण तस्य तदाश्रयत्वमित्यत्रानुभवमनुकूलयति-अहमिति।। प्रत्यग्रूपेणैवेत्युप[णेत्येव]कारेणैव निरस्यं दर्शयति-नाद्वयेति।। तत्र हेतुमाह-अद्वयेति ।। यदुक्तं ब्रह्मणोऽर्थान्तरस्य ज्ञानाज्ञानाश्रयत्वमिति, तत्र वक्तव्यम्—ईश्वरस्य वा जगतो वा जीवस्य वा तदाश्रयत्वमिति । न प्रथम इत्याह—नापीति ।। तत्र हेतुः —ईश्वर इति ।। तस्याज्ञानाश्रयत्वाभावे हेत्वन्तरमाह —ईश्वरस्येति ।। "यस्सर्वज्ञः सर्ववित्" इत्यादिश्रुतिः; "बुद्धिमता म[मस्मि" इ]त्याद्या स्मृतिः; लोके चेश्वरस्सर्वज्ञ इति प्रसिद्धः । द्वितीयं दूषयति—नापि जगत इति ।। तत्र हेतुमाह—जडत्वेति ।।

## पञ्चप्रक्रियाव्याख्या

तद्व्यतिरिक्तस्यैव तदाश्रयत्वात् बन्धमोक्षसंबन्धो भवेदित्यत्राह—ब्रह्मणश्चेति ॥ तत्रानुभवं प्रमाणयति—अहमिति ॥ एवकारव्यावर्त्यमाह[6]—नाद्वयानन्दरूपेणेति ॥ तत्र हेतुः—अद्वयेति ॥ परिशेषात् प्रत्यग्ब्रह्मण एव ज्ञानाज्ञानाश्रयत्वं निर्धारयितुं ईश्वरस्य तदाश्रयत्वं तावन्निराचष्टे—नापीति ॥ तत्र हेतुमाह—ईश्वर इति ॥ तत्रैव हेत्वन्तरं दर्शयति—ईश्वरस्येति ॥ "यः सर्वज्ञः सर्ववित्" इत्यादिका श्रुतिः; "बुद्धिमतामस्मि" इत्याद्या स्मृतिः[7] । तर्हि अनुभवविरोधाद्यभावात् जगतो ज्ञानाद्याश्रयत्वमित्याशङ्क्याह-नापीति ॥ तत्र जडस्य अज्ञानात्मकत्वाद् रज्जुरगवत् [वत् न ज्ञाना][8]ज्ञानाश्रयत्वमिति हेतुमाह-जडत्वेति[9] ॥ अस्तु[10] तर्हि जीवस्यैवोभयाश्रयत्वमजडत्वादित्यत्राह-

१. The words within brackets are omitted in the original.
२. TM omits नन्द...स्वरूपं
३. TM. श्वराख्यास्य
४. G omits मूढ
५. TM. ब्रह्मणस्त्वेति
६. TM. एतद्व्यवर्त्यं
७. TM. श्रुतिः
८. TM omits ज्ञान...रगवत्
९. TM. जडत्वादिति
१०. TM omits अस्तु...जडत्वात्

## पञ्चप्रक्रिया

बिम्बस्य ज्ञानाज्ञानाश्रयत्वम्, सुषुप्तिकाले सर्वोपाधिप्रलये जीवत्वं शक्तिमद्-विद्यायामवस्थितमिति पुनरुत्थानलिङ्गेनानुमेयमेव भवति, न त्वपरोक्षतया परोक्षतया वा सुषुप्तिकाले जीवत्वस्य स्फुरणमस्ति। न च परोक्षे जीवत्वे जीवस्यापरोक्षत्वं संभवति। तत्र जीवाश्रयत्वं चेत्, अज्ञानमपि परोक्षमेव

## पञ्चप्रक्रियाटीका

न हि जडस्य स्वयमज्ञानात्मकस्य ज्ञानाज्ञानाश्रयत्वं, रज्जुभुजङ्गादावदर्शनादित्यर्थः। तृतीयं प्रत्याह—नापि जीवाख्यस्येति ॥ तत्र सौषुप्ताज्ञानाश्रयत्वायोगात् प्रत्यक्-चैतन्यस्यैव ज्ञानाश्रयत्वस्यापि वक्तव्यत्वादित्याह–सुषुप्तीति॥ तत्र कार्यात्मनः सर्वस्योपाधेर्विलयात् कार्योपाध्यवच्छिन्नजीवभावस्यापि तदभावात् न जीवस्तत्कालादिना-[लीना] ज्ञानाश्रयो भवितुमलमित्यर्थः। जीवत्वस्यात्यन्तविनाशे पुनरर्थानुपपत्ति-रित्याशङ्क्याह–जीवत्वमिति॥ जीवभावस्य सुषुप्तिकाले शक्तिशेषत्वेनावस्थाने किमिति तत्कालीना ज्ञानाज्ञानाश्रयाज्जीवस्य[श्रयत्वं जीवस्य] नाश्रीयते? तत्राह—न त्विति ॥ उत्थितेनोत्थानलिङ्गात् जीवत्वस्य सौषुप्तिकस्य शक्तिशेषस्य अनुमितस्यापि तत्काले कयापि विधया स्फुरणाभावात् न तदा स्फुरतोऽज्ञानस्य तदाश्रयत्वसिद्धिरित्यर्थः। ननूत्थितेन सौषुप्तजीवत्वं शक्तिशेषमनुमेयं परोक्षतया परिस्फुरति; तेन तदाश्रयतया जीवस्यापि स्फुरणात् युक्तमज्ञानाश्रयत्वम्; तत्राह—न चेति ॥ जीवत्ववत् जीवस्य परोक्षत्वेऽपि स्फुरणादेव अज्ञानाश्रयत्वं किं न स्यादित्याशङ्क्याह —तत्रेति ॥

## पञ्चप्रक्रियाव्याख्या

नापि जीवस्येति ॥ सुषुप्तिसमये सर्वस्य कार्यस्य प्रविलीनत्वात् उपाध्यवच्छिन्नस्य जीवस्यापि तदानीमभावात् न सौषुप्ताज्ञानाश्रयत्वं जीवस्य स्यादिति तत्र हेतुमाह—सुषुप्तीति ॥ ननु पुनरुत्थानानुपपत्त्यैव जीवत्वस्य नात्यन्तनाशः; अतोऽज्ञानस्य तदाश्रयत्वमस्तीत्याशङ्क्याह—जीवत्वमिति ॥ एवकारनिरस्यं निर्दिशति—न त्विति ॥ ननु सुप्तोत्थितेन सौषुप्तं जीवत्वमनुमेयं शक्तिशेषत्वेन; अतो जीवस्यापि तदाश्रयतयावगमान्नानुपपन्नमज्ञानाश्रयत्वमित्यत्राह—न चेति ॥ तथापि जीवस्य ज्ञायमानत्वादेव अज्ञानाश्रयत्वमित्यत्राह—तत्रेति ॥ भवत्वज्ञानस्यापि पारोक्ष्य-

१. G. अविद्यायावस्थितं
२. TM. तदुपा-
३. G. नन्विति

## पञ्चप्रक्रिया

स्यात्; न चैतद्दृष्टम्; तस्मात् प्रत्यग्ब्रह्मण एवाज्ञानित्वमभ्युपगन्तव्यम्, सुषुप्तिकाले प्रत्यक्चैतन्याश्रयत्वेनैवाज्ञानस्य स्फुरणात्। न चाज्ञानस्य विषयाश्रयविभागेनावश्यं भवितव्यमिति चोद्यमस्ति, सुषुप्तौ तदभावादेव; तदुक्तं वार्तिककारैः—

## पञ्चप्रक्रियाटीका

सुषुप्तिकालः सप्तम्यर्थः। आकाशे परोक्षेऽपि तदधिकरणस्य शब्दस्यापरोक्षत्ववत् जीवे परोक्षेऽपि तदाश्रितमज्ञानमपरोक्षं किं न स्यादित्याशङ्क्याह–[न चैतदिति॥][2] न हि जीवस्य परोक्षत्वं केनचिद्दृष्टमिष्टं वा 'अहम्' इत्यपरोक्षत्वात्, आकाशस्य च साक्षिप्रत्यक्षत्वेन परोक्षत्वानभ्युपगमादित्यर्थः। अथवा भवत्वज्ञानस्यापि सौषुप्तस्य परोक्षत्वमित्याशङ्क्योक्तम्—न चैतदिति॥ न खल्वज्ञानस्य सुषुप्तिकालीनस्यापि परोक्षत्वं युक्तम्–'एतावन्तं कालं न किञ्चिदवेदिषम' इत्युत्थितस्य सौषुप्ताज्ञानपरामर्शात्, तस्य चानुभवापेक्षत्वान्नित्यानुभवादपरोक्षादेव तदधिगतेरेष्टव्यत्वादित्यर्थः। सौषुप्ताज्ञानाश्रयस्यार्थान्तरस्यासम्भवे फलितमाह—तस्मादिति॥ तत्पदपरामृष्टमेव हेतुं स्पष्टयति—सुषुप्तीति॥ नन्वज्ञानस्य प्रत्यक्चैतन्याश्रयत्वेऽपि ततोऽन्यस्य तद्विषयत्वमेषितव्यम्; ज्ञाने विषयाश्रयभेदवदज्ञानेऽपि तद्भेदस्यावश्यकत्वात् इति, तत्राह—न चेति॥ सुषुप्त्यवस्थायां प्रत्यक्चैतन्यातिरेकेणाज्ञानस्याश्रयविषययोरदर्शनात्, तस्यैव तद्भावात्, अवस्थान्तरेऽपि प्रत्यक्चैतन्यस्योभयथाभावादिति हेतुमाह—सुषुप्ताविति॥ प्रत्यक्चैतन्यमेवाज्ञानमज्ञानं[वाज्ञमज्ञातं] चेत्यत्र सुरेश्वराचार्यसम्मतिमाह–तदुक्तमिति॥ प्रमात्रादेरुत्थानिरुत्थानमभिव्यक्तिः, तदपेक्षया पूर्वं सुषुप्त्यवस्थायां

## पञ्चप्रक्रियाव्याख्या

मित्याशङ्क्याह—न चेति॥ फलितमाह—तस्मादिति॥ तच्छब्दोक्तमेव हेतुं व्यनक्ति—सुषुप्तीति॥ ननु ज्ञानस्येवाज्ञानस्यापि भवितव्यमेव विषयाश्रयविभागेनेत्यत आह—न चेति॥ सुषुप्तिसमये ज्ञानस्याश्रयविषयभेदाभावात् कालान्तरेऽपि तस्यैवाज्ञत्वमज्ञातत्वं चेत्यत्र वार्तिककारसम्मतिं दर्शयति–तदुक्तमिति॥ प्रमात्राद्यभिव्यक्तेः पूर्वं सुषुप्त्य[वस्थाव]भेदो न भवेदिति हेतुमाह–

१. TM. त्वेन चाज्ञानस्य
२. This pratīka is omitted in the original.
३. G adds भवत्वज्ञानस्य

पञ्चप्रक्रिया

"प्रमात्राद्युत्थितेः[1] पूर्वं चिदन्यानचोत्तमः [नन्वयात्तमो]-।
विशेषणा चिदेवैका स्वानुभूत्यैव गम्यते ।।" इति ।

तत्राज्ञानस्यानादित्वात् अन्तःकरणकञ्चुकद्वारं विनैव चैतन्यमाश्रयो[2] भवति; ज्ञानस्य तु परिणामित्वादन्तःकरणकञ्चुकमपरिधायैव चैतन्यमाश्रयो भवति ।

पञ्चप्रक्रियाटीका

चिदात्मनोऽन्येन सह विषयविषयित्वेन, आश्रयाश्रयित्वेन च तमसोऽसम्बन्धाच्चिदात्मैव तमोविशेषणत्वेनादाय स्वगतभेदमन्तरेण तस्याश्रयतया विषयतया च 'अहमज्ञो मां न जानामि' इति स्वरूपभूतानुभूतिवशादवगम्यते । तथाज्ञानस्य आश्रयविषयविभागो नास्तीत्यर्थः । ज्ञानाज्ञानयोराश्रयश्चैतन्यमित्यत्रावान्तरविशेषं दर्शयन् अनादिनोऽज्ञानस्य द्वारनिरपेक्षमनादिचैतन्यमेवाधिकारिणं[करणं] योग्यत्वादित्याह—तत्रेति ।। यदि पुनरन्तःकरणकञ्चुकितत्वं द्वारमपेक्ष्य चैतन्यमज्ञानाधिकरणमिष्येत तदा कादाचित्कत्वादन्तःकरणस्य तद्विशिष्ट[ष्टस्य]स्यापि तथात्वादनाद्यज्ञानं कदाचिदाधारविधुरमज्ञानमेव न स्यादित्यर्थः । तर्हि ज्ञानस्यापि व्यवधानं विनैव चैतन्यमाश्रयः स्यादित्याशङ्क्याह —ज्ञानस्य चेति[त्विति] ।। ज्ञानाख्यपरिणामा-

पञ्चप्रक्रियाव्याख्या

सुषुप्ताविति ।। प्रत्यक्चैतन्यावस्थायां[3] चितोऽन्येन सह विषयविषयित्वेनाश्रयाश्रयित्वेन[4] चानन्वयात्तमसश्चिदेकैव तमोविशेषणोपेता सती "अहमज्ञो मां न जानामि"[5] इति तस्याश्रयत्वेन विषयत्वेन च स्वरूपावभासबलादवगम्यते; अतोऽज्ञानस्य आश्रयविषयभेदो न भवेदित्यर्थः । यद्यपि चैतन्याश्रयत्वं ज्ञानाज्ञानयोरविशिष्टम्, तथापि सादित्वादनादित्वविशेषादवान्तरविशेषो विद्यत इत्याह—तत्रेति ।। चैतन्यस्य ज्ञानाश्रयत्वमन्तःकरणकञ्चुकद्वारकमित्यत्र[6] हेतुमाह—

१. TM. प्राभ्युत्थितेः
२. G. चैतन्याश्रयः
३. G. प्रत्यक्चैतन्येन
४. G omits विषय
५. G. मामन्यं न जानाति
६. TM. ततो

पञ्चप्रक्रिया

कूटस्थस्य परिणामिद्वारं विनैव परिणामसम्बन्धविरोधात्। अतो बोध्यश्शबलप्रियात्मा न परो नाप्यचेतन इति शबलात्मनो बोध्यत्ववचनं जीवाज्ञानपक्षस्य साधकं न भवति। ब्रह्माज्ञानपक्षेऽपि ज्ञानाश्रयत्वस्य ब्रह्मणोऽन्तःकरणशबलताद्वारत्वादनाद्यज्ञानसम्बन्धोऽपि ब्रह्मणोऽज्ञानसम्बन्धद्वारक एव,

पञ्चप्रक्रियाटीका

श्रयत्वं चैतन्यस्य व्यवधानसापेक्षमित्यत्र हेतुमाह—कूटस्थस्येति॥ चिदात्मनो बुद्धिव्यवधानेन ज्ञानाश्रयत्वे बुद्धिविशिष्टस्यैव बोध्यत्वं फलमित्याह—अत इति॥ किमिति विशिष्टस्यैव बोध्यत्वमिष्टम्, विशेष्यस्य परस्य वा विशेषणस्य बुद्धेर्वा किमिति नेष्यते, तत्राह—नेत्यादिना॥ उभयोरपि बोध्यत्वाभावे हेतुरितिशब्देनोच्यते। न हि नित्यशुद्धबुद्धमुक्तस्वभावस्य परस्यात्मनो बुभुत्साभावे बोध्यत्वमुपपद्यते; नापि बुद्धेर्घटवदचेतनाया बुभुत्सा अस्ति, येन बोध्यत्वं सिध्येदित्यर्थः। ननु विशिष्टस्य बोध्यत्वे तस्यैवाज्ञत्वाभ्युपगमाद्विशिष्टस्य च जीवत्वाज्जीवस्यैवाज्ञानाश्रयत्वं बलादापद्येतेत्याशङ्क्याह—शबलेति॥ ज्ञानाज्ञानयोरेकाश्रयत्वेऽपि प्रत्यग्ब्रह्मणो बुद्धिव्यवधानमन्तरेणाज्ञानाश्रयतायाः तस्यैव तद्व्यवधानेन ज्ञानाश्रयतायाश्च दर्शितत्वान्न जीवस्योभयाश्रयत्वावकाशोऽस्तीत्याह — ब्रह्मेति॥ ननु ब्रह्मणोऽन्तःकरणसंबन्धमन्तरेण अनाद्यज्ञानाधिकरणत्वे स्वाभाविकं तस्याज्ञानित्वमापद्येत; तथा च तन्निवृत्तिश्चैतन्यवदशक्या स्यादिति, तत्राह—अनादीति॥ यो ब्रह्मणोऽनाद्यज्ञानसम्बन्धः सोऽपि तस्याज्ञानसम्बन्धद्वारको न स्वाभाविकः।

पञ्चप्रक्रियाव्याख्या

कूटस्थस्येति॥ यतोऽन्तःकरणद्वारकमेव ज्ञानाश्रयत्वं चैतन्यस्य स्यात् अतो यत्परैरुदीर्यते जीवस्य शबलरूपत्वाच्छबलस्य बोध्यत्वे तस्यैवाज्ञानाश्रयत्वं बलादापन्नमज्ञस्यैव बुभुत्सासंभवादिति, तदपि परिहृतमित्याह—अत इति॥ अतश्शब्दाभिहितमेव हेतुं विवृणोति—ब्रह्माज्ञानपक्षेऽपीति॥

१. G. परिणाम
२. G विरोधादतो ऽशबल एवात्मा
TM. विरोधावस्तुतो बोध्यः
३. TM. विज्ञानाश्रय
४. G. द्वारकत्वात्
५. TM omits अत इति
६. TM omits बुद्ध
७. TM omits वकाशो...अनाद्यज्ञा
८. G. ज्ञान
९. G. भवादपि

### पञ्चप्रक्रिया

न ब्रह्मद्वारकः। नाप्यज्ञानान्तरसम्बन्धद्वारकः, भेदस्य भेदान्तरानपेक्षत्ववद-ज्ञानसम्बन्धस्याप्यज्ञानान्तरसम्बन्धानपेक्षत्वात्। तस्मादविदुष एवाविद्या, अविद्ययैव[1] चाविद्यावत्त्वम्। तस्माद्ब्रह्मैव संसरति ब्रह्मैव मुच्यते "ब्रह्म वा इदमग्र

### पञ्चप्रक्रियाटीका

"नास्याविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते।
ब्रह्मद्वारा त्वविद्येति न कथञ्चन युज्यते॥"

इति वार्तिककारैरुक्तत्वादित्यर्थः। ब्रह्मणोऽज्ञानसम्बन्धोऽज्ञानसम्बन्धद्वारकश्चेदन-वस्था स्यादित्याशङ्क्याह—नापीति॥ तत्र सदृष्टान्तं हेतुमाह—भेदस्येति॥ ब्रह्मचैतन्यस्यैवाज्ञानवतो बुद्धिद्वारेण ज्ञानाख्यपरिणामसम्बन्धः; तस्य चाज्ञानवशा-देवाज्ञानसम्बन्धः; न चानवस्था स्वाश्रयत्वं वा, तस्य[2] स्वपरनिर्वाहकत्वादिति। उप-संहरति—तस्मादिति॥ विद्याविद्ययोरेकाश्रयत्वप्रसिद्धेरित्यर्थः। अविद्यावत्त्वस्य चैतन्यवदात्मनि स्वाभाविकत्वं व्यावर्तयति–अविद्ययैवेति॥ अनवस्था तु परिहृता। परमप्रकृतं निगमयति—तस्माद्ब्रह्मैवेति॥ उक्तेऽर्थे ब्रह्मकण्डिकां प्रमाणयति—ब्रह्म वा इति॥ इदंकार्यावच्छिन्नं प्रत्यक्चैतन्यं त्वम्पदार्थभूतम्। अग्रे[3] ज्ञानोदयात्

### पञ्चप्रक्रियाव्याख्या

ननु ब्रह्मणोऽन्तःकरणकञ्चुकपरिधानमन्तरेणाज्ञानाश्रयत्वे चैतन्यवदज्ञानस्यानिवृत्तिः स्यादित्य-त्राह—अनाद्यज्ञानसम्बन्धोऽपीति॥ अस्याज्ञानसम्बन्धोऽप्यज्ञानद्वारक एव, न स्वाभाविकः—

"नास्याविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते।
ब्रह्मद्वारा त्वविद्येयं न कथञ्चन युज्यते॥"

इति वार्तिककृद्भिरभिहितत्वादित्यर्थः। अज्ञानसम्बन्धस्याज्ञानहेतुत्वेन दृष्टान्तमाह—भेदस्येति॥ यथा भेदस्य भेदान्तरमन्तरेण भेदभेदिनोर्भेदहेतुत्वम्, स्वपरनिर्वाहकत्वात्, तथा ज्ञानस्यापीति भावः। सम्प्रति ब्रह्मण एवाज्ञानित्वादेः सम्भवात्तस्यैव बन्धमोक्षौ संभवत इत्युपसंहरति—तस्मादिति॥ तत्र[4] प्रमाणमाह—ब्रह्मेति॥ ननु अन्तःकरणकरम्बितस्य जीवस्यैव ज्ञानकर्माधि-

१. TM. विद्ययैव
२. G. तस्य पर
३. TM. अग्रेऽप्रज्ञानो-
४. TM adds तत्र

## पञ्चप्रक्रिया

आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्" इत्यादिश्रुतेः । यदि पुनरनात्मविशिष्टस्य जीवप्रतिबिम्बस्यैव ज्ञानकर्माधिकारित्वं स्यात्, न पुनर्जीवत्वकञ्चुकद्वारेण प्रत्यग्ब्रह्मणः, तदा विशिष्टरूपेणैव

## पञ्चप्रक्रियाटीका

पूर्वावस्थायामपि कारणावच्छिन्नं तत्पदार्थभूतं ब्रह्मैवासीत्; तत्पुनस्त्वम्पदार्थरूपं चैतन्यं कार्यकारणवैशिष्ट्यं परित्यज्यात्मानं चिन्मात्रमेव महावाक्यवशादवगच्छति । तमेवावगतिप्रकारमभिनयति 'अहम्' इति । प्रत्यक्चैतन्यं त्वंपदलक्ष्यमहमित्युच्यते; ब्रह्मेति तत्पदलक्ष्यं पूर्णचैतन्यं निरुच्यते; तयोरैक्यं सामानाधिकरण्येन विवक्ष्यते; अस्मीति तस्य नित्यसिद्धत्वं कथ्यते । तस्य यथोक्तात्तत्वज्ञानात् तदेव सर्वशब्दितं पूर्णं ब्रह्म विद्वान् भवतीति विद्याफलसङ्कीर्तनम् । आदिशब्देन "ब्रह्म वेद ब्रह्मैव भवति" इत्याद्या श्रुतिर्गृह्यते । ननु अन्तःकरणविशिष्टस्य जीवाख्यप्रतिबिम्बस्यैव ज्ञानकर्माधिकारित्वात्, तस्यैव बन्धमोक्षयोर्वक्तव्यत्वात्, "तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्" इत्यादिश्रुतेश्च जीवत्वकञ्चुकं परिधाय प्रत्यग्ब्रह्मणस्तदनभ्युपगमात् कुतो यथोक्तसिद्धान्तसिद्धिरिति, तत्राह—यदि पुनरिति ॥ बुद्धिविशिष्टस्य ज्ञानकर्माधिकारित्वे तस्यैव तेनैव रूपेण स्वर्गापवर्गान्वयित्वे हेतुमाह–

## पञ्चप्रक्रियाव्याख्या

कारित्वात्तस्यैव बन्धमोक्षसम्बन्धः; अन्तःकरणकञ्चुकद्वारेण ब्रह्मैव संसरति स्वाविद्यया, स्वविद्यया च मुच्यत इत्येतन्न घटत इत्याशङ्कामनूद्य दूषयति—यदि पुनरित्यादिना ॥

१. TM. आत्मविशिष्टस्य

२. TM. भूतं

३. TU. वत्

४. TU omits तस्य

५. TU omits एव

६. TU omits मोक्ष...यथोक्तसिद्धा

७. G adds अतो न

पञ्चप्रक्रिया

तस्य स्वर्गमोक्षान्वयो वक्तव्यः, साधकस्यैव फलित्वात् । अन्यथान्यस्य साधकत्वेऽन्यस्य च फलित्वे अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्; विशेषणस्य च महाप्रलयादौ नष्टस्य पुनरुत्थानाभावात्; नष्टोत्पत्तेश्च लोकवेदविरुद्धत्वात् ।

पञ्चप्रक्रियाटीका

साधकस्यैवेति ॥ विशिष्टरूपस्य बन्धमोक्षयोरेकस्यासम्भवात् न तस्य साधकत्वमिति शेषः । विशिष्टस्य साधकत्वं ततोऽन्यस्य फलित्वमिति कर्तृभोक्तृभेदाङ्गीकारे दोषमाह—अन्यथेति ॥ एकस्यैव साधकत्वं फलित्वञ्चेति शेषः । अस्तु तर्हि विशिष्टस्यैव तदुभयमित्याशङ्क्याह —विशेषणस्य चेति ॥ महाप्रलयादावित्यादिशब्देन सुषुप्तिमूर्च्छे गृह्येते; तदभावे विशिष्टस्यापि भावो न सिद्ध्यतीत्यर्थः । नष्टस्यापि विशेषणस्य पुनरुत्पत्तेः तद्विशिष्टतया जीवः सेत्स्यतीत्याशङ्क्याह —नष्टेति ॥ न हि लोके नष्टस्य घटादेरसतो जन्म दृष्टम्; "कुतस्तु खलु सोम्यैवं स्यात्" इत्यादिश्रुतौ चासज्जन्म निरस्तम्; तेनासतो विशेषणस्यासद्रूपेण सद्रूपेण वा जन्मायोगात्तद्विशिष्टो जीवोऽपि न सिद्ध्यतीत्यर्थः । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः, 'तदेवेदम्' इति कल्पान्तरेऽपि प्रत्यभिज्ञानदर्शनात् पूर्वोत्तरकल्पयोर्विशेषणैक्यात् तद्विशिष्टजीवसिद्धिरित्याशङ्क्य "समाननामरूपत्वाच्चावृत्तावप्यविरोधः" इति न्यायेन प्रत्यभिज्ञादेः समाननामरूपविशेषणविषयत्वात्सदेव विशेषण-

पञ्चप्रक्रियाव्याख्या

विशिष्टस्यैव स्वर्गापवर्गभागित्वे हेतुमाह—साधकस्यैवेति ॥ विशिष्टस्य साधकत्वे तदन्यस्य च फलित्वे दोषमाह—अन्यथेति ॥ भवतु तर्हि विशिष्टस्यैव साधकत्वं फलित्वं चेत्यत आह—विशेषणस्य चेति ॥ आदिपदेन सुषुप्तिमूर्च्छयोर्ग्रहः । विशेषणाभावे विशिष्टस्याप्यभावः स्यादित्यर्थः । नष्टस्यापि तस्य पुनरुत्पत्तेर्विशिष्टो जीवः सिद्ध्येदित्याशङ्क्याह—नष्टेति ॥ न खलु लोके नष्टस्य घटादेर्जन्म दृष्टम्; "कुतस्तु खलु सोम्यैवं स्यात्" इति श्रुत्या चासदुत्पत्तिर्निरस्यते; अतश्चैतद्विरुद्धमित्यर्थः । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः स एवायमिति कल्प-

१. TM omits महा
२. TM. जीवः सत् स्यात्
३. TM. लोके न तस्य
४. TM omits सद्रूपेण
५. TM omits च

पञ्चप्रक्रिया

समाननामरूपप्रत्यभिज्ञया तदेव विशेषणमिदानीमिति वक्तुमशक्यम्। विशेषणनाशाद् विशिष्टस्य विशेषणप्रत्यभिज्ञान्त[ज्ञातु]त्वभावात् स्वरूपस्यैव प्रत्यभिज्ञातृत्वे स्वरूपस्यैवाज्ञातृत्वमापद्यते। द्वैतदर्शनविभ्रमस्याज्ञानाश्रयत्वादुपाधिविशिष्टताद्वारेण स्वरूपस्यैव साधकत्वे स्वरूपस्यैव फलित्वसंभवान्नोक्तदोषः। तथा

पञ्चप्रक्रियाटीका

मिदमिति वक्तुमशक्यत्वात्, नैवमित्याह—समानेति ॥ किञ्च विशिष्टस्य वा स्वरूपस्य वा प्रत्यभिज्ञातृत्वमिति विकल्प्य प्रथमे प्रत्यभिज्ञानुपपत्तिरित्याह—विशेषणेति ॥ द्वितीयं प्रत्याह—स्वरूपस्येति ॥ तथा च तस्यैव ज्ञातृत्वाज्ञातृत्वाभ्यां बन्धमोक्षभाक्त्वं युक्तमित्यर्थः। इतश्च विशिष्टस्य द्वैतदृष्टिविभ्रमान्तर्भूतस्य ज्ञानाज्ञानाश्रयत्वं बन्धमोक्षभाक्त्वं वा न युक्तमित्याह—द्वैतेति ॥ उक्तदर्शनात्मनो भूतस्याज्ञानकार्यत्वेन तन्निष्ठत्वात् कार्यस्य कारणाधिकरणत्वायोगात् तदन्तर्भूतस्य जीवस्य नाज्ञानाश्रयत्वमित्यक्षरार्थः। नन्वन्तःकरणकञ्चुकद्वारेण स्वरूपस्य साधकत्वेऽपि विशेषणनाशे द्वाराभावात् कुतः स्वरूपस्य साधकत्वफलित्वयोरुपपत्तिरिति, तत्राह—उपाधीति ॥ पिण्डद्वारा मृदो घटादिभावेऽपि न तद्द्वारैव तस्याः सलिलानयनाद्यर्थ-

पञ्चप्रक्रियाव्याख्या

भेदेऽपि प्रत्यभिज्ञावगतेर्विशेषणैक्यात्तद्विशिष्टो जीवः सिद्धयेदित्यत्राह—समानेति ॥ "समाननामरूपत्वाच्चावृत्तावप्यविरोधः" इति न्यायेन प्रत्यभिज्ञादेः समाननामरूपविशेषणमात्रविषयत्वात्तदेवेदं विशेषणमिति वक्तुमशक्यमित्यर्थः। किञ्च प्रत्यभिज्ञाबलाद्विशेषणैक्ये विशिष्टसिद्धिरिति वदता, किं विशिष्टस्य प्रत्यभिज्ञातृता अभिधीयते, किं वा स्वरूपस्यान्ये[स्य? आद्ये] प्रत्यभिज्ञासम्भव इत्याह—विशेषणेति ॥ द्वितीये बन्धमोक्षभागित्वमसि[मपि]तस्यैवोपपद्यत इत्याह—स्वरूपस्यैवेति॥ ननु त्वत्पक्षेऽप्यन्तःकरणकञ्चुकद्वारेण स्वरूपस्यैव साधकत्वाङ्गीकरणात्तन्नाशे द्वारनाशात्तस्यैव फलित्वायोगादन्यस्य साधकत्वम्, अन्यस्य फलित्वमित्ययं दोषः समान इत्याशङ्क्याह—द्वैतदर्शनविभ्रमस्येति ॥ पिण्डद्वारेण घटोत्पादनहेतुत्वेऽपि मृदो यथार्थक्रियाकारित्वे तदपेक्षा-

१. G. भिज्ञात्वे
२. TM. द्वैतदशायां भ्रमस्य
G. द्वैतदर्शन...ज्ञाना
३. G. यथा
४. G. तन्नाशात्तस्यैव
५. G. अन्यसाधकत्वं

पञ्चप्रक्रिया

ब्राह्मणादिशरीरविशिष्टताद्वारेणात्मनः कर्माधिकारित्वे ब्राह्मणादिशरीरविशिष्टतारूपेणैवात्मनो भोक्तृत्वं स्यादिति चोद्यं नावतरति, विशिष्टस्यासाधकत्वात्, स्वरूपस्यैव च साधकत्वात्। तस्माद् ब्रह्मैव संसरति स्वाज्ञानात्, स्वज्ञानाच्च मुच्यते। न च ब्रह्मणस्साधकत्वे 'अद्वयानन्दब्रह्म मूढम्' इत्याद्यनुभवाभावो दूषणम्, प्रत्यग्रूपेण ब्रह्मणो मूढत्वसाधकत्वाभ्युपगमादित्युक्तम्।

पञ्चप्रक्रियाटीका

क्रियान्वयित्वं नियन्तुं शक्यते। तथोपाधिद्वारेण स्वरूपस्य साधकत्वे तद्द्वारैव फलित्वमिति नियमायोगादुपाधिनाशेऽपि फलित्वाविरोधादेकस्यैव साधकफलित्वयोरनुपपत्तिरित्यस्मिन् पक्षे दोषो नावतरतीत्यर्थः। विशेषणस्य वा विशिष्टस्य वा द्वारत्वेऽपि साधकत्वादिकोटिनिष्ठत्वाभावात् नानुपपत्तिरित्यत्र दृष्टान्तमाह—यथेति॥ तर्हि ब्राह्मणादिशरीरविशिष्टताद्वारेण कर्माधिकारित्वादात्मनो देवादिशरीरविशिष्टताद्वारेण च तत्फलभोक्तृत्वात् कर्तृत्वभोक्तृत्वयोर्वैय्यधिकरण्यमापतेदित्याशङ्क्याह—विशिष्टस्येति॥ तथैव प्रत्यग्ब्रह्मण्यपि विशिष्टद्वारेण साधकत्वफलित्वयोः स्वरूपनिष्ठत्वादस्मदुक्तमविरुद्धमित्युपसंहरति — तस्मादिति॥ ननु ब्रह्मणस्साधकत्वे तस्मिन् 'मूढम्' इत्याद्यनुभवराहित्यं कथमित्याशङ्क्याह — न चेति॥ आदिशब्देन ज्ञानित्वसाधकत्वादि सङ्गृह्यते। तत्र प्रागुक्तमेव हेतुत्वेन स्मारयति—प्रत्यग्रूपेणेति॥ ब्रह्मण एव प्रत्यगात्मना साधकत्वाद्यभ्युपगमेऽपि

पञ्चप्रक्रियाव्याख्या

भावः; तद्वत्स्वरूपस्योपाधिद्वारेण साधकत्वेऽपि फलित्वे तदपेक्षा नास्तीत्यस्मिन्मते नायं दोषः स्यादित्यर्थः। अत्र दृष्टान्तमाह – यथेति॥ सम्प्रत्युपाधिद्वारेण प्रत्यग्ब्रह्मण एव साधकत्वफलित्वयोरुपपत्तिमुपसंहरति—तस्मादिति॥ ननु ब्रह्मणः साधकत्वे तत्रैव मूढत्वाद्यनुभवाभावः कथमित्याशङ्क्याह—न चेति॥ तत्र हेतुमाह—प्रत्यगिति॥ तत्रैवाभियुक्तसंमतिमाह—

१. TM. चोदनात् तरति
२. TM. भावात्
३. G. त्वसाधकत्वादित्युक्तम्
४. TU. असत्पक्षे
५. G omits त्वेऽपि...अत्र
६. G omits मूढत्वा...तत्रैवा

## पञ्चप्रक्रिया

तदुक्तं भाष्यकारैः "न च ब्रह्मण इष्टं[1] चिकीर्षुणा शास्त्रार्थविपरीतं[2]कल्पनया स्वार्थपरित्यागः कार्यः" इति । वार्तिककारैरप्युक्तम्—

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यति संसारं मय्येवाज्ञानकल्पितम् ॥"

## पञ्चप्रक्रियाटीका

वृद्धसंमतिमाह—तदुक्तमिति ॥ ब्रह्मणस्सत्यज्ञानानन्तानन्दात्मकस्य मूढत्वसाधकत्वादि नाभ्युपगन्तव्यम्, स्वभावभङ्गप्रसङ्गात्, ततोऽन्यस्यैव तु जीवस्य तदेष्टव्यम्, तद्विरोधादिति वदता ब्रह्मणो हितमेव कर्तुमिच्छता भवता शास्त्रार्थस्याद्वैतमेव तत्त्वम्; द्वितीयं तु कल्पितमसदित्येवमात्मकस्य यद्विपरीतं ब्रह्मणोऽर्थान्तरस्य साधकत्वमित्यादि तस्य अप्रामाणिकस्यैव कल्पनया शास्त्रानुसारिणः स्वार्थस्य[3] सम्यग्ज्ञानानुरोधिनो निःश्रेयसस्य परित्यागो नैव कर्तुं युज्येत । यदि हि ब्रह्मणस्साधकत्वादि परित्यज्यान्यस्यैव कस्यचित्तदभ्युपगम्येत, तदा शास्त्रार्थीभूताद्वैतविपरीतद्वैताभ्युपगमात् तत्त्वज्ञानान्मोक्षो विवक्षितो न सिध्येत् । न च ब्रह्मणस्साधकत्वाभ्युपगमे ज्ञानानन्ताद्यात्मकस्वभावव्याघातः[4]; तस्याज्ञानतः साधकत्वसंभवेऽपि वास्तवस्वभावविपरिलोपाभावादित्यर्थः । प्रत्यग्भूते ब्रह्मण्येव साधकत्वादीत्यत्र आचार्यान्तरसंवादं दर्शयति—वार्तिककारैरपीति ॥ न हि ब्रह्मणि प्रत्यग्भूते नित्यशुद्धत्वादिलक्षणे साधकत्वकल्पना नावकल्पते, समस्तस्यापि संसारस्य तस्मिन्नेवा[5]ज्ञाननिबन्धनस्याध्यवसायात्, तदन्तर्भूतसाधकत्वेऽनुपपत्त्यभावादित्यर्थः । प्रत्यग्रूपेण

## पञ्चप्रक्रियाव्याख्या

तदुक्तमिति ॥ सत्यज्ञानानन्दात्मकं ब्रह्म संसारि इत्यङ्गीकारे स्वरूपवैपरीत्यापातान्नैतत्कल्पयितुं शक्यम्, अन्यस्यैवाशक्त्वादिति वदता शास्त्रार्थ[6]विपरीतभेदाभ्युपगमात् संसारनिवृत्तिरूपपुरुषार्थहानिः कृता स्यादित्यर्थः । तत्रैव सुरेश्वराचार्य[7]संमतिं दर्शयति —वार्तिककारैरपीति ॥

१. G. इष्टः
२. G omits रीत
३. TU. स्वार्थकस्य
४. TU. व्यापारः
५. G and TU. अस्मिन्
६. G omits र्थविप...हानिः
७. G. ईश्वराचार्यं

पञ्चप्रक्रिया

इति। तस्माद्ब्रह्मैव संसरति ब्रह्मैव मुच्यते; न तु जीवानां ज्ञानाज्ञानसंबन्धः, बन्धमोक्षान्वयो वा।[एतेन]अज्ञानकल्पितानामज्ञानकल्पितभेदानां वा प्रतिबिम्बकल्पानां वा बिम्बस्थानीये ब्रह्मणि अज्ञानमिति पक्षस्य निरस्तत्वात्। यत्तु

पञ्चप्रक्रियाटीका

ब्रह्मणः साधकत्वादिसिद्धौ फलितमाह—तस्मादिति॥ नन्वज्ञानकल्पितानां जीवानां तत्कल्पितभेदानां वा तेषां ज्ञानाज्ञानसंबन्धो बन्धमोक्षसंबन्धो वाभ्युपगम्येत; अथ वा जीवानां प्रतिबिम्बस्थानीयानां बिम्बस्थानीयब्रह्मविषयमज्ञानमिति मतमिष्यते; तदेवं मतान्तरेषु जाग्रत्सु सत्सु कथं यथोक्तसिद्धान्तासिद्धिरिति, तत्राह-ते[एते]नेति॥ प्रागुक्तेन न्यायेन मतान्तराणां निराकृतत्वात् अस्मन्मतमविरुद्धं सिध्यति। न हि जीवानामज्ञानकल्पितानामज्ञानादिसंबन्धः सेद्धुं पारयति, अज्ञानकल्पितानामज्ञानकार्यत्वात्, कारणाज्ञानाधारत्वविरोधात्। न च अज्ञानकार्यत्वे रज्जुभुजङ्गादिवत् ज्ञानाद्यन्वयो युज्यते। न च जीवानामज्ञानकल्पितभेदानामज्ञानादिसंबन्धः संभवति, तेषां निष्कृष्टभेदानां चिन्मात्रम[त्रस्या]ज्ञानादिसंबन्धे.सिद्धान्तभेदाभावात्; कल्पितभेदवतां चाज्ञानादिसंबन्धे सिद्धे प्राचीनदोषानुषङ्गात्। न च जीवानां प्रति-

पञ्चप्रक्रियाव्याख्या

उक्तार्थस्य चाचार्याभिमतत्वादयमेव वेदार्थ इति निगमयति—तस्मादिति॥ प्रत्यग्ब्रह्मण एव कथं बोधाबोधाभ्यां मुक्तत्वममुक्तत्वं च भवेत्, अविद्याविजृम्भितानां जीवानामविद्याकल्पिताभेदानां वा जीवानामज्ञानादिसंबन्धबन्धमोक्षोपपत्तेः, तथा प्रतिबिम्बकल्पानां जीवानां बिम्बस्थानीये ब्रह्मण्यज्ञानमिति पक्षसंभवाच्चेत्याशङ्क्याह—एतेनेति॥ न खल्वज्ञानकल्पितानां जीवानां तत्कल्पितभेदानां वा तेषामज्ञानादिसंबन्धः संभवी, पूर्वसिद्धस्याज्ञानस्य पश्चिमजीवाश्रयत्वायोगात्; प्रतिबिम्बकल्पानां बिम्बस्थानीयेऽज्ञानमिति पक्षेऽपि पूर्वोदितन्यायेनाज्ञानस्याश्रयविषयभेदासंभवादित्यर्थः। ब्रह्मण एव यद्यविद्याश्रयत्वाद्यभिमतम्, कथं तर्ह्याचार्येण जीवस्याज्ञानित्वमुक्तमित्या-

१. G. संबन्धासंबन्धमोक्ष
२. The word within brackets is omitted in all mss.
३. G omits ल्पानां वा बि
४. G and TU add जीवानां
५. TU. मातं नाम ज्ञान
६. G omits जीवानां.. भेदानां
७. G. पूर्वोदितज्ञानेन
८. TM omits अभिमतं...प्रेत्यैतत्

पञ्चप्रक्रिया

"पराक्प्रवणया[1] दृष्ट्या धीस्थो[2] ज्ञोऽज्ञानमात्मनि।
व्योमकार्ष्ण्यादिवत्तत्[तज्जं][3] संभावयति न स्वतः॥"

इति धीस्थस्याज्ञानमुक्तम्, तदन्तःकरणोपाधिकस्य जीवरूपस्य स्वकारणाज्ञान-प्रत्यभिज्ञाव्यञ्जकत्वाभिप्रायेण, नाज्ञानस्य जीवाश्रयत्वाभिप्रायेण। प्रत्यक्-

पञ्चप्रक्रियाटीका

विश्वकल्पानां विश्वस्याजीवे ब्रह्मणि अज्ञानमिति युक्तम्; अज्ञानस्याश्रयविषयविभागा-भावस्याभिहितत्वात्। तस्मात्तन्मतान्तराणामसंभवात् ब्रह्मैव प्रत्यग्भूतमज्ञानादिसंबन्ध[न्धवदिति]सिद्धमित्यर्थः। ब्रह्मणश्चेदज्ञानाद्बन्धः,ज्ञानान्मोक्षश्चेष्यते,कथं तर्हि वार्तिक-कृता जीवस्याज्ञानाश्रयत्वमुक्तमित्याशङ्क्यानुवदति —यत्त्विति॥ यथा बालो व्योम्नि विवेकवैकल्याञ्नैल्यादिकमभ्यस्य 'नभो नीलम्' इति व्यवहरति, तथा चिदात्मा बुद्ध्युपहितः विषयेषु पराक्षु शब्दादिविषयेषु प्रवणा तदाकारा वा बुद्धिविपरिणाम-रूपा दृष्टिरिष्टा, तया बहिर्मुखो भूत्वा स्वात्मनिष्ठाशून्यः सन्नात्मन्यज्ञानं तत्कार्यं च संभाव्य 'मानेन जानामि कर्ताहम्' इति व्यवहरति; न स्वात्मदृष्ट्या तथाविधं व्यवहार-मनुभवतीत्यन्तःकरणस्य विज्ञानात्मनो यदज्ञानित्वं वार्तिककृतोक्तमित्यनुवादार्थः। अन्तःकरणोपहितस्य जीवस्य स्वकारणीभूताज्ञानाभिव्यञ्जकत्वमुपेत्य वार्तिक-कारैरुक्तम्, न तु जीवस्याज्ञानाश्रयत्वमाश्रित्य वार्तिकं प्रवृत्तमिति दर्शयति — तदन्तःकरणेति॥ नन्वन्तःकरणोपहितस्य जीवस्याज्ञानाभिव्यञ्जकत्वेऽपि स्वगतत्वेन तदभिव्यञ्जकत्वादज्ञानस्य जीवाश्रयत्वं दुष्परिहरमित्याशङ्क्याह—प्रत्यगिति॥ कथं

पञ्चप्रक्रियाव्याख्या

शङ्कामनुभाष्य अन्तःकरणोपास्यस्य[पहितस्य] बन्धनिदानाज्ञानाभिव्यञ्जकत्वमभिप्रेत्यैतदभिहित-मिति समाधत्ते–यत्त्वित्यादिना॥ तथापि जीवाश्रयत्वमेवाज्ञानस्याश्रयणीयम्, तत्रैव प्रतीयमानत्वा-दित्यत्राह—प्रत्यगिति॥ कथं पुनरेतन्निर्णीतम्[6], तत्राह—व्यञ्जकानामिति॥ तेषामेवंस्वभावत्वं

१. TM. परा प्रवणया
२. G. दध्यादिस्थो
३. TM. व्योमौष्ण्यादिवसस्तत्
All mss. of the text add इति before this.
४. TM. वैकल्यादिकं
५. TM omits तु
६. TM. निर्जितम्

पञ्चप्रक्रिया

चैतन्याश्रयमेत्र ह्यज्ञानं जीवः स्वगतत्वेनाभिव्यनक्ति, व्यञ्जकानां बहूनामेवंस्वभावत्वात्; तथा हि शाबलेयादयः पिण्डाः सर्वगतमपि गोत्वं स्वगतत्वेनैव व्यञ्जयन्ति 'शाबलेयो गौः, बाहुलेयो गौः, मुण्डो गौः' इति । तथा ह्रस्वदीर्घप्लुतादयो ध्वनिभेदाः करणाभिव्यक्तिद्वारेण शब्दमपि व्यञ्जयन्तः स्वगतत्वेनैवाभिव्यञ्ज-

पञ्चप्रक्रियाटीका

पुनरन्यगतमज्ञानं स्वगतत्वेन जीवोऽभिव्यञ्जयेदित्याशङ्कयाह—व्यञ्जकानामिति ॥ तेषामेवंस्वभावत्वं विवृण्वन्नादौ सर्वगता जातिरिति पक्षापेक्षयोदाहरणमाह—तथा हीति ॥ व्यक्तीनां स्वगतत्वेन गोत्वाभिव्यञ्जकत्वमेवाभिनयति—शाबलेयेति ॥ व्यक्तिमात्रव्यापिनी जातिर्न सर्वगतेति दर्शने निदर्शनान्तरं दर्शयति–तथेति ॥ आदिशब्दादुदात्तादयो गृह्यन्ते । तेषां शब्दाभिव्यञ्जकत्वं कथमिति चेत्तत्राह—करणेति ॥ अस्ति हि शब्दस्यार्थविशेषाभिव्यक्तेन करणात्मकं रूपम्; तदभिव्यक्तिश्च ह्रस्वदीर्घत्वादिध्वनिभेदवशाद्भवति "नागोऽनङ्गा जराजरा" [?] इत्यादावर्थभेदप्रतिपत्तिदर्शनात्। तथा च शब्दगतस्य करणभावस्याभिव्यक्तिद्वारा शब्दं व्यञ्जयन्तो ह्रस्वादयः स्वगतत्वेनैव तं व्यञ्जयन्तीत्यर्थः । स्वगतत्वेन तेषां शब्दाभिव्यञ्जकत्वं प्रकटयति—ह्रस्व इति ॥ अकारस्य वर्णात्मनः शब्दस्य ह्रस्वादिना समानाधिकृतस्य तद्गतत्वेन तद्वशादभिव्यक्तिरभिव्यक्तेत्यर्थः । परीक्षकपरम्मतमुदाहरणद्वयमुक्त्वा लौकिकाभि-

*पञ्चप्रक्रियाव्याख्या*

*सैवसर्वगता जातिरिति पक्षावलम्बनेन प्रदर्शयति* **तथा हीत्यादिना** ॥ व्यक्तिसर्वगता जातिरिति मते दृष्टान्तान्तरमाह— **तथेत्यादिना** ॥ तीर्थिकानामभिमतमुदाहरणमभिधाय लौकिकाभिमत-

१. G omits गतत्वे
२. G. यथा हि
३. TM. पिण्डात्
४. TM. गतिगोत्वं
५. TM. व्यञ्जयति
६. TM. भेदः
७. G and TM. व्यञ्जयति
८. G and TM. इत्याह
९. TU omits स्वभावत्वं
१०. TM. पक्षापेक्षयाह
११. TM and TU. सर्वगता
१२. TM omits पक्षा...जातिरिति

## पञ्चप्रक्रिया

यन्ति ह्रस्वोऽकारो दीर्घोऽकार इत्यादि। तथा मणिकृपाणदर्पणादयो मुखस्याभिव्यञ्जकाः स्वगतत्वेनैव मुखमभिव्यञ्जयन्ति। तस्मादभिव्यञ्जकानां बहूनामयमेव स्वभावो लोके समधिगतः यदुताभिव्यङ्ग्यं स्वगतत्वेनाभिव्यञ्जयन्ति इति। तस्मादन्तःकरणस्य तदुपाधिकजीवस्य वाज्ञानाश्रयत्वाभावेऽपि प्रत्यगात्माश्रयाज्ञानाभिव्यञ्जकत्वाद्युक्तमेवं तद्गतत्वेनाज्ञानस्य स्फुरणम् 'अहं न जानामीदम्' इति। अस्ति चान्तःकरणस्य तदुपाधिजीवस्य वाज्ञानाभिव्यञ्जकत्वम्;

## पञ्चप्रक्रियाटीका

प्रेतमुदाहरणान्तरमाह—तथा मणीति॥ लौकिकपरीक्षकसंप्रतिपन्नोदाहरणसिद्धमर्थमुपसंहरति—तस्मादिति॥ लोके शास्त्रे चाधिगतमेवंस्वाभाव्यमेव स्फुटयति—यदुतेति॥ दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके निवेशयति—तस्मादन्तःकरणस्येति॥ न खलु अन्तःकरणस्य स्वगतत्वमेना[त्वेना]ज्ञानाभिव्यञ्जकत्वेऽपि तत्कार्यस्य तदाश्रयत्वमाश्रीयते। तथा तदुपहितस्य जीवस्योपाधिना समानयोगक्षेमस्य तद्वदेव अज्ञानानाश्रयत्वेऽपि प्रत्यगाश्रिताज्ञानाभिव्यञ्जकत्वात्, अज्ञानस्य 'अहं न जानामि' इति तद्गतत्वेन स्फुरणाविरोधात् प्रत्यक्चैतन्याश्रितमेवाज्ञानं जीवपक्षपातितया प्रतीतिपथमवतरतीत्यर्थः। अन्तःकरणस्य जीवस्य वा तदुपहितस्य प्रत्यगज्ञानाभिव्यञ्जकत्वे किं प्रमाणमित्याशङ्क्य प्रतिज्ञापूर्वकमन्वयव्यतिरेकौ प्रमाणयन्नादौ व्यतिरेकमुदीरयति—अस्ति चेत्यादिना॥ संप्रत्यन्वयमन्वाचष्टे—

## पञ्चप्रक्रियाव्याख्या

मभिधत्ते—तथा मणीति॥ उदाहरणोपपादितमुपसंहरति—तस्मादित्यादिना॥ दार्ष्टान्तिकं निगमयति—तस्मादन्तःकरणस्येति॥ यद्यन्तःकरणस्य जीवस्य चाज्ञानाभिव्यञ्जकत्वे मानमस्ति, अस्तु तर्हि त्वदुक्तप्रकारेण प्रत्यक्चैतन्याश्रयमेवाज्ञानम्; न तु तदस्तीत्याशङ्क्य प्रतिज्ञापुरस्सरं तत्र व्यतिरेकमन्वयं चावेदयन् क्रमेणान्वयव्यतिरेकौ प्रमाणीकुरुते—अस्ति चेत्यादिना॥

१. TM omits अभिव्यञ्ज...तस्मात्
२. G omits यदुत
३. G omits गत
४. TM omits वा
५. G omits त्वा
६. TM adds तं
७. G omits जीव
८. TM omits त्वेऽपि...व्यञ्जक
९. G. ज्ञान

पञ्चप्रक्रिया

तदभावे सुषुप्त्यादौ प्रत्यगात्माश्रयस्याज्ञानस्य प्रतीयमानत्वेऽपि स्फुटतर-प्रतीत्यभावात्; तद्भावे च जागरिते स्फुटतरप्रतीतेः[१]; उक्तं च वार्तिक-कारैरन्तःकरणादेरज्ञानस्याभिव्यञ्जकत्वम्

"बाह्यां वृत्तिमनुत्पाद्य व्यक्तिः स्याद्राहमो यथा ।
नर्तेऽन्तःकरणं तद्वद्ध्वान्तस्य व्यक्तिराञ्जसी ॥"

इति । यदपि गीतासु क्षेत्रज्ञाध्याये स्थित्वा भाष्यकारेण करणस्याज्ञानित्व-

पञ्चप्रक्रियाटीका

तद्भावे चेति ॥ अत्र प्रतीतेः स्फुटतरत्वं सविकल्पत्वं प्रतीयमानत्वं निर्विकल्पकप्रती-तिविषयत्वमिति विवेकः । तस्य च स्वापादौ न तादृक्प्रतीतिविषयत्वं परामर्शवशादव-सेयम्, अन्तःकरणस्योपाधेः तदुपहितस्य च जीवस्यान्वयव्यतिरेकसिद्धेः । प्रत्य-गात्माश्रयाज्ञानाभिव्यञ्जकत्वे वृद्धसंमतिमाह—उक्तं चेति ॥ अहमित्यहङ्कारस्य निर्विकल्पकप्रतीतावपि 'घटमहं जानामि' इति सविकल्पकप्रतीतिः विषयाकारपरि-णामद्वारेणैव सिद्ध्यति । तथा स्वापादौ निर्विकल्पकत्वेनाज्ञानस्फुरणे परामर्शसमधि-गतेऽपि सविकल्पकतया स्फुटतराभिव्यक्तिस्तस्यान्तःकरणपराधीनतया प्रसिद्धे-त्यर्थः । यदुक्तं प्रत्यगात्मरूपेण ब्रह्मणोऽज्ञानाश्रयत्वम्, तदयुक्तम् "करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्" इति वदद्भिर्भाष्यकारैः अन्तःकरणस्याज्ञानाधि-करणत्वाभिधानादित्याशङ्क्याह—यदपीति ॥ भाष्यकाराभिप्रायमुक्तमेव प्रपञ्चयति-

पञ्चप्रक्रियाव्याख्या

प्रदर्शितेऽर्थे विश्वरूपाचार्यानुमतिमाह—उक्तं चेति ॥ कथं नु नाम प्रत्यग्ब्रह्मणोऽज्ञत्वमभिधीयते, भाष्यकारेणैवान्तःकरणस्याज्ञानाश्रयत्वाभिधानादित्याशङ्क्याह—यदपीति ॥ नन्वन्तःकरणस्या-ज्ञानाश्रयत्वाङ्गीकरणेऽपि प्रत्यगात्मनस्तत्संबन्धाभावः सेत्स्यतीत्याशङ्क्यापसिद्धान्तापातात् मैव-

१. G. अतिस्फुट
२. TM adds अभावात्
३. TM omits इति विवेकः...विष-यत्वं
४. TM. भाष्यकारैरेव
५. G. यद्यपीति
६. G omits ननु... तस्मादिति

पञ्चप्रक्रिया

मुक्तम्, तदपि प्रत्यगात्मनोऽज्ञानित्वस्य परमार्थत्वापवादार्थम्, न त्वन्तःकरणस्याज्ञानित्वसमर्थनार्थं, प्रत्यगात्मनोऽज्ञानित्वस्य परमार्थत्वे प्राप्तेऽज्ञानाभिव्यञ्जकस्य करणस्य तदज्ञानमिति तस्य मस्तके तद्धि क्षिपति, प्रत्यगात्मनस्तु तत्संबन्धो मा भूदिति; न त्वन्तःकरणस्याज्ञानसंबन्धो विवक्षितः, साङ्ख्यसिद्धान्तस्वीकारप्रसङ्गात्, भाष्यान्तरविरोधाच्च। तस्माद्भगवत्पादीये दर्शने प्रत्यगात्मन एव ज्ञानित्वमज्ञानित्वं च। तदुक्तमिष्टसिद्धिकारैः—

"स्वरुक् च भाति यत्तत्र ज्ञानाज्ञानविभागधीः।
अतोऽविद्या भवेद्यस्य भवेत्तद्विषयैव सा॥"

पञ्चप्रक्रियाटीका

प्रत्यगात्मन इति॥ अन्तःकरणस्याज्ञानाश्रयत्वसमर्थनेऽपि प्रत्यगात्मनो वस्तुतस्तत्संबन्धे सिद्धे तदेव किं न स्यादित्याशङ्कयापराधीं[राद्धा]न्ता न्मैतमिति व्यावर्त्य विवृणोति—न त्विति॥ इतोऽपि गीताभाष्ये बुद्धेरज्ञानसंबन्धोक्त्या प्रतीचो वस्तुतस्तदसंबन्धोऽभिप्रेतः; अन्यथा भाष्यकारैर्ब्रह्मात्मनोऽज्ञानसंबन्धाभिधायिभिर्विरोधप्रसङ्गादित्याह—भाष्यान्तरेति॥ गीताभाष्यविरोधमाशङ्कितमपाकृत्य प्रकृतमुपसंहरति—तस्मादिति॥ अज्ञानं प्रत्याश्रयो विषयश्च प्रत्यगात्मैवेत्यत्र आचार्यान्तरसंवादं संगिरते—तदुक्तमिति॥ यदस्वयंप्रकाशजडमसंविद्रूपं तत्र भवत्यपि विभागो नाज्ञानसंबन्धः, तस्य अज्ञानात्मकत्वात्। यत्तु स्वयंप्रकाशं प्रत्यक्चैतन्यं तत्राज्ञानं

पञ्चप्रक्रियाव्याख्या

मित्युक्तमेव प्रकटयति—प्रत्यगात्मन इत्यादिना॥ इतोऽपि नान्तःकरणस्याज्ञानाधिकरणता गीताभाष्येऽभिमतेत्याह—भाष्यान्तरेति॥ एवं भाष्यवार्तिकपर्यालोचनया युक्तितश्चाश्रयत्वविषयत्वभागिनी निर्विभागचितिरेवेत्युपसंहरति—तस्मादिति॥ उपसंहृतेऽर्थेऽभियुक्तान्तरवाक्यमनुकूलयति—तदुक्तमिति॥ अज्ञानद्वारेण परमात्मनः सर्वकारणत्वेऽप्यवान्तरविभागो विद्यत

१. TM. वादार्थमनत्वन्तःकरणस्य
२. TM. तस्मिन्
३. G. न तु करणस्य
४. TM. त्मना वा
५. TM omits सिद्धे
६. TU. तदुपसंहरति

पञ्चप्रक्रिया

इति । तस्मात् साभासप्रत्यगज्ञानमेव परमात्मनः क्षेत्रक्षेत्रज्ञात्मकजगत्कारणत्वे द्वारम् । तत्राज्ञानवति[निर्विचि]दाभासप्रधानद्वारावष्टम्भेन क्षेत्रज्ञकारणत्वम्, अज्ञानप्रधानद्वारमादाय क्षेत्रकारणत्वम् । तदुक्तम्—

"तमः प्रधानं क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ।
परः कारणतामेति भावनाज्ञानकर्मभिः ॥" इति ।

पञ्चप्रक्रियाटीका

प्रत्याश्रयविषयविभागो न भाति, स्वप्रकाशे विभागस्य स्वतोऽन्यतो वा सिद्ध्यसंभवात् । अतः सिद्धान्ते अविद्याश्रयस्यैव तद्विषयत्वमित्यर्थः । प्रत्यगात्मरूपेण परस्य ब्रह्मणोऽज्ञानाश्रयत्वे प्रागुक्तं ब्रह्मणो जगत्कारणत्वं साभासाज्ञानद्वारकं सिद्धमिति फलितमाह—तस्मादिति ॥ साभासं प्रत्यगज्ञानं ब्रह्मणो जगत्कारणत्वे द्वारमित्युक्तम्; इदानीं कार्ये जगति क्षेत्रक्षेत्रज्ञात्मके चेतनाचेतनविभागप्रथा कथमित्याशङ्क्याह—तत्रेति ॥ प्रकृतं जगदत्र सप्तम्या परामृश्यते । चिदाभासप्राधान्येन क्षेत्रज्ञकारणत्वम्, अज्ञानप्राधान्येन क्षेत्रकारणत्वमित्यत्र प्रमाणमाह—तदुक्तमिति ॥ परस्य ब्रह्मणो द्विधाकारणत्वे सहकारिकारणमाह—भावनेति ॥ भावनाज्ञानादि[ज्ञातानि] पूर्ववासनात्मकानि कर्माणि धर्माधर्मरूपाणि; तैस्सहकारिभिरेव तत्र तत्र कारणत्वं प्रतिपद्यते, "धिया जनयते कर्मभिः" इति श्रुतेरित्यर्थः । अथवा भावना पूर्वज्ञानं विहितं प्रतिषिद्धं च विद्याशब्दवाच्यम्; कर्म पुनरुक्तमेव; तैरयं तत्र तत्र कारणीभवति "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इत्यत्र त्रयाणामपि परलोकारम्भे कारणत्वश्रवणादित्यर्थः । "नात्माश्रुतेः" इत्यत्र क्षेत्रज्ञस्य कार्यत्वनिराकरणात् कथं परस्य

पञ्चप्रक्रियाव्याख्या

इति दर्शयितुं पूर्वोक्तद्वारत्वमेवाज्ञानस्येति निगमयति—तस्मादिति ॥ तमेव विभागं दर्शयति—तत्रेत्यादिना ॥ तत्र प्रमाणमाह—तदुक्तमिति ॥ कथं नाम परस्य क्षेत्रज्ञकारणत्वम् ? "नात्माश्रुतेः"

१. G omits अज्ञान...णत्वम्
२. TM omits मेति भा
३. TU omits तैः...तत्र कार
४. TM. स्यास्तीति
५. TM. परस्वक्षेत्रज्ञश्रुतेः

पञ्चप्रक्रिया

अत्र क्षेत्रज्ञशब्देन पुर्यष्टकोपाधिपतितचिदाभासग्रहणम् । कर्मेन्द्रियपञ्चकम्, बुद्धीन्द्रियपञ्चकम्, अन्तःकरणचतुष्टयम्, प्राणादिपञ्चकम्, भूतपञ्चकम्, अविद्या, कामः, कर्म—इति पुर्यष्टकम् ।

"कर्मेन्द्रियाणि खलु पञ्च तथापराणि
बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः ॥"

अविद्येति मिथ्याज्ञानम्, अविद्याकार्यप्रकरणात् । अत्र तमोग्रहणम-[1]

पञ्चप्रक्रियाटीका

तत्कारणत्वमित्याशङ्क्य उपहितस्याविरुद्धं जन्मेत्याह—अत्रेति ॥ सप्तम्या सर्गप्रकरणं परामृश्यते । किं तत्पुर्यष्टकमिति, तद्व्याचष्टे—कर्मेन्द्रियपञ्चकमित्यादिना ॥ उपदिष्टमेव पुर्यष्टकं श्लोकेन स्पष्टयति—कर्मेन्द्रियाणीति ॥ 'अविद्याकामकर्माणि' इत्यत्राविद्याशब्देन, 'तमः पुनरष्टमी पूः' इत्यत्र तमःशब्देनाग्रहणापरपर्यायस्यानाद्यनिर्वाच्याज्ञानस्य कथं कार्याधिकारे ग्रहणमित्याशङ्क्याह—अविद्येति ॥ प्रकरणविरोधात् उभयत्राविद्यातमःशब्दयोर्नाग्रहणविषयत्वमित्याह—अत इति ॥ यदेतत्परस्य ब्रह्मणो जगत्कारणत्वाद्युक्तं तदविद्यारूपमाश्रित्य बन्धात्मकं प्रपञ्चितमित्युपसंहरति—अविद्येति ॥ किं तर्हि विद्यावृत्तमित्याशङ्क्य निरुपाधिकं प्रत्यग्ब्रह्मरूपं पराकृता-

पञ्चप्रक्रियाव्याख्या

इत्यत्र तस्य कार्यत्वनिराकरणादित्याशङ्क्य विशिष्टस्य कार्यत्वाङ्गीकारेणैतदित्युत्तरमाह—अत्रेति ॥ किं तत्पुर्यष्टकमित्यत्राह—कर्मेन्द्रियाणीति ॥ जीवस्य कार्योपाधिकत्वात् कथं तस्याविद्योपाधिकत्वमित्याशङ्क्याविद्याशब्दार्थमाह—अविद्येति ॥ प्रकरणार्थसर्वस्वं संक्षेपेण निगमयति—

१. TM. तमा
२. G. क्रमो
३. TM omits अविद्येति...त्वमित्याह
४. TM. कारान्नैतत्
५. G omits किं...याणीति

पञ्चप्रक्रिया

विद्यावृत्तमेतत्परमात्मनः । [विद्यावृत्तं तु] पूर्वोक्तमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य सर्वज्ञात्मनः कृतौ
पञ्चप्रक्रियाख्यं प्रकरणम्
समाप्तम् ॥

पञ्चप्रक्रियाटीका

शेषानर्थकं परमानन्दात्मकं प्रागेव दर्शितमित्याह—विद्यावृत्तमिति ॥ इतिशब्देन वक्तव्यशेषाभावात् प्रकरणपरिसमाप्तिरपि द्योत्यते ॥

शुद्धानन्दपदाम्भोजभृङ्गायितधिया मया ।
सविधा सुधया पञ्चप्रक्रियाव्याक्रिया कृता ॥
सा च प्रीतिं प्रतन्वाना कृतिनां हृदये सदा ।
उपागता गतद्वैतमुत्तमं पुरुषोत्तमम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपादशिष्य-
भगवदानन्दज्ञानविरचिता पञ्चप्रक्रियाटीका
समाप्ता ॥

पञ्चप्रक्रियाव्याख्या

अविद्यावृत्तमित्यादिना ॥ पूर्वोक्तं पुर्यष्टकं प्रतिपत्तिसौकर्यार्थम् । तदेव श्लोकेन संगृह्णाह "कर्मेन्द्रियाणि" इति ॥

वेदपूर्णपदाम्भोजभृङ्गायितमना मुनिः ।
व्याक्रियामकरोत्पञ्चप्रक्रियायाः प्रमाणगाम् ॥
वन्देऽहं दक्षिणामूर्तिं कुन्दमन्दारसप्रभम् ।
स्वप्रभं सुखसाम्राज्यं सर्वगीर्वाणवन्दितम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवेदपूर्णमुनीन्द्रशिष्येण
पूर्णविद्याख्येन मुनिना विरचितेयम् ॥

---

१. The words within brackets are omitted in all mss.
२. G. सुप्रभं

## APPENDIX I

READINGS IN THE TRIVANDRUM MS. OF THE TEXT.

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 4, | 2. | अथातः | अथ |
| 6, | 7. | मुख्यार्थगुणयोगात् | मुख्यार्थसंबन्धागुणयोगात् |
| 7, | 3. | परत्र वृत्तिः | परप्रवृत्तिः |
| 9, | 2. | ननु मुख्य | मुख्य |
| | 4. | लौकिकानामभावात् | अभावात् |
| 10, | 6. | इति गुणयोगात् | गुणयोगात् |
| 11, | 3. | एकांश | एकांशभाग |
| 12, | 3. | प्रत्यगात्मा | प्रत्यगात्मानं |
| 15, | 3. | प्रतिपाद्यमाने | प्रतिपद्यमाने |
| 19, | 3–4. | शब्दवाच्यं पारोक्ष्यसहितमद्वयानन्दचैतन्यं ब्रह्मशब्दवाच्यमिति तयोरहंब्रह्म. | This passage is omitted. |
| | 4. | कार्यकारण | कारण |
| | 6. | लक्ष्येते | लक्ष्यते |
| | 8. | कारणाविद्या | कारणादिविद्या |
| 21, | 3. | असंभावना | असद्भावना |
| | 4. | तात्पर्यज्ञान | तात्पर्याज्ञान |
| | 6. | अधिकारिणः | अधिकारिणि |
| 22, | 4. | परब्रह्मताजीवन्मुक्त्योः | परब्रह्मशरीरस्थित्योः |
| 25, | 3. | जीवन्मुक्ति | जीवन्मुक्त |
| | 6. | हननापनयन | हननात् नयन |
| 26, | 5. | परि[वरि]वस्यति | वरि.[व]स्यति |
| 29, | 5. | वायोस्तेजः | वायोरग्निः |
| | 6. | अपञ्चीकृतमहाभूतानि | अपञ्चीकृतपञ्चमहाभूतानि |
| 30, | 6. | इत्येकमन्तः[मेवान्तः]करणं | इत्येकमन्तःकरणं |
| 31, | 6. | एतत् | तत् |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 33, | 3. | कालेषु | कालेषु च |
| | 6. | निर्मितम् | विनिर्मितम् |
| 34, | 3. | विषयः | विषय |
| | 5. | कारणात्मना | करणात्मना |
| 34, 5–35, | 3. | समाध्यारम्भकाले मुमुक्षुः पश्चाग्निश्चलेऽन्तः करणे जाते क्षेत्रजातं सर्वं | This passage is omitted. |
| 36, | 3–4. | तेजोव्यतिरेकेण तेजो वायुव्यतिरेकेण | तेजो वायुव्यतिरेकेण |
| 40, | 6. | अनन्तादिशब्दैः | अनन्तानन्दादिशब्दैः |
| 43, | 7. | निषिक्त | निमित्त |
| 44, | 4. | मुख्यस्यार्थस्य | सूक्ष्मस्य मुख्यार्थस्य |
| 46, | 5. | यत् | सत् |
| 47, | 3. | आनन्दलक्षणं | आनन्दपञ्चलक्षणं |
| 49, | 5. | भूमभावा | भूतभावा |
| 50, | 3. | ज्ञानद्वारेण | ज्ञानाद्वारेण |
| 52, | 5. | स्वाभासस्वाविद्यया | स्वाभास्वाविद्यया |
| | 6. | नाशे | नाशे च |
| 53, | 4. | ज्ञानाज्ञानयोः | ज्ञानादज्ञानयोः |
| 54, | 4. | अनुमेयमेव | अनुमेयत्वमेव |
| 57, | 6. | द्वारत्वात् | द्वारकत्वात् |
| | | अज्ञानसंबन्धद्वारकः | अज्ञानासंबन्धद्वारकः |
| 59, | 4. | पुनरनात्म | पुनरात्म |
| 60, | 5. | महाप्रलयादौ | प्रलयादौ |
| 61, | 4. | प्रत्यभिज्ञान्त[ज्ञातु]रभावात् | प्रत्यभिज्ञातुरभावात् |
| | 5. | आपद्यते | आपाद्यते |
| | 6. | तथा | यथा |
| 62, | 5. | स्वरूपस्यैव च साधकत्वात् | This is omitted. |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 32, | 7. | मूढत्वसाधकत्वा | मूढत्वासाधकत्व |
| 35, | 4. | कार्ष्ण्यादिवत्तत्[त्तज्ञं] | कार्ष्यादिवसस्तु |
| | 5. | प्रत्यभिज्ञा | प्रतिज्ञा |
| 36, | 4. | सर्वगतमपि गोत्वं | सर्वगतिगोत्वं |
| | 4–5. | व्यञ्जयन्ति | व्यञ्जयति |
| | 6. | स्वगतत्वेनैवाभिव्यञ्जयन्ति | स्वगतत्वेनाभिव्यञ्जयति |
| 67, | 6. | वाज्ञान | ज्ञान |
| | 7. | तद्गत | तत्तद्गत |
| | | इदम् | This is omitted. |
| 68, | 4. | प्रतीतेः | प्रतीतेर्भावात् |
| 69, | 4. | अज्ञानित्वसमर्थ | अज्ञानित्वमसमर्थ |
| | 5. | तस्य मस्तके ताद्धि | तस्य स मस्तके तस्मिन् |
| | 6. | न स्वन्तःकरणस्य | न स्वकरणस्य |
| | 8. | प्रत्यगात्मनः | प्रत्यगात्मना |
| | 9. | स्वरुक् च भाति | स्वरूपा भाति |
| | | ज्ञानाज्ञानं | न ज्ञानाज्ञ |
| 70, | 6. | परः | परा |
| 71, | 9. | तमः | तमा |

# APPENDIX II

READINGS IN THE TANJORE TEXT OF THE THIRD PRAKARAṆA.

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 29, | 3. | तच्छब्द[सच्छब्द] | सच्छब्द |
| | 4. | तस्माद्वा[सत आ] | सत आ |
| | 5. | वायोस्तेजः। तेजस आपः। | वायोरग्निः। अग्नेरापः। |
| | 5–6. | अद्भ्योऽन्नम्। अन्नशब्द-वाच्या | अद्भ्यः |
| | 6. | एवमेतान्यपञ्चीकृतमहाभूतानि | एवमेतानि पञ्चीकृतपञ्चमहाभूतानि |
| | | तेभ्यः सप्तदशकं | तत्कार्यं सप्तदश |
| 30, | 3. | श्रोत्र | श्रोत्रं |
| | 5. | मनो बुद्धिश्चेत्यन्तःकरणद्वयं | मनो बुद्धिरहङ्कारश्चित्तमित्यन्तःकरण-चतुष्टयम् |
| | 6. | इत्येकमन्तः[मेवान्तः] | इत्येकमेवान्तः |
| | | क्रियाभेदात् पाचक | क्रियाभेदात्मा च |
| | 7. | सप्तदशकं लिङ्गमु[लिङ्ग-मित्यु]च्यते | सूक्ष्मशरीरं लिङ्गमित्युच्यते |
| | 8. | तत्कार्यं च | तत्कार्यं |
| 31, | 3. | त्रिवृत्करण | This is omitted. |
| | 4. | शरीरजातं | शरीरं जातं |
| | 5. | तत्कार्यं च | तत्कार्यं |
| | 6. | जातं च | जातं |
| | | विराडित्युच्यते | विराडुच्यते |
| | | एतत् | तत् |
| | 7. | एक एव | एवं |
| 32, | 3. | द्वयानुप्रविष्टं | द्वयप्रविष्टं |
| | 4–5. | जाग्रत्स्वप्नसुषुप्तिसाक्षी | This is omitted. |
| 33, | 3. | नित्यशुद्धबुद्धमुक्तसत्यपर-मानन्दाद्वयस्वभावः | नित्यः शुद्धः परमानन्दाद्वयश्च भावः |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 33, | 4. | सुषुप्तीरन्तःकरणावस्थाः | सुषुप्तीन्यन्तःकरणस्थानानि |
| | 6. | निर्मितं | निमित्तं |
| | | कर्मनिमित्तः | कर्मनिमित्त |
| 34, | 3. | स्वप्नः | स्वप्नम् |
| | | जाग्रत् | जागरित |
| | 4. | मायाविनि ब्रह्मणि | ब्रह्मणि मायाविनि |
| | 5. | जाग्रदादि | जागरितस्वप्नसुषुप्ति |
| | 6. | एवं | एव |
| 35, | 7. | सन्ति | सन्ति तत्कार्यत्वात् |
| | | मात्र | मात्रं |
| | 8–9. | यथा…नास्ति | This is omitted. |
| | 9. | पञ्चमहाभूतानि | महाभूतानि |
| 36, | 3. | वाच्या | वाच्यव्याप्ता |
| | 3–4. | नास्ति…वायुः | This is omitted. |
| | 4. | आकाश | आकाशशब्द |
| | 4–5. | आकाशः तच्छब्दवाच्य | This is omitted. |
| | 5. | मायावि ब्रह्म | मायावि |
| | | मायाऽयपि . नास्ति | This is omitted. |
| | 6. | सुषुप्तीनां | सुषुप्तानां |
| | 7–8. | ब्रह्म…तत्र | This is omitted. |
| | 8. | पर्यन्त | पर्यन्तं |
| 37, | 3. | यस्तत्त्वमसिवाक्यार्थः | तत्त्वमसीति वाक्यार्थः |
| | | न्यस्त | विन्यस्त |
| | | अनुभवपर्यन्तेन | अनुभवफलपर्यन्तेन |
| | 4. | जानाति | This is omitted. |
| | | एव | एवं |

# APPENDIX III

## Readings in the Travancore University Ms. of the Pañcaprakriyāṭīkā.

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 1, | 13. | [शुभा] | गताः |
| | 14. | वस्थि[पन्थि] | पन्थि |
| | 15. | चालन[पालन] | पालन |
| 2, | 3. | णमिष्ट | णकमिष्ट |
| | 4. | जातं | जातं च |
| | 6. | कुर्वन् | प्रकुर्वन् |
| | 7. | सहितः[संनिहित] | संनिहित |
| | 9. | च विभाङनं[विज्ञानं] | चाभिधानं |
| | 10. | द्समाप्तौ | द्समाप्तिः |
| | 11–2. | इत्यादिना ऋकृ | इत्याद्या |
| | 12. | परं[पर] | परम |
| | | कार्याव[र्यत्वाव] | कार्यताव |
| | 15. | यत्वात्[अपौरुषेयत्वात्] | अपौरुषेयत्वातं |
| 3, | 4. | स[तस्य] | तस्य |
| | 7. | अज्ञातौ[अज्ञातस्य] | अज्ञातस्य |
| | 16. | लिङ्गत्व[ङ्गक] | लिङ्गक |
| | 18. | भवति च | भवति |
| | 19. | विज्ञानरूपस्य | विज्ञातिरूपस्य |
| 4, | 7. | त्वाभ ध्यु[भ व्युत्पा] | भ व्युत्पा |
| | 9. | वात्[द्वभौ] | द्वभौ |
| | 10. | गममाप[गमात्] | गमात् |
| | 11–2. | तन्निश्चित्यतथेति[तन्निर्दिशति—अथेति ॥] | तन्निर्दिशति—अथेति ॥ |
| | 17. | ब्रह्मा...सुत्रभावतोऽपि [ब्रह्म; अधर्मसुत्रात्मनोऽपि] | ब्रह्म; अधर्मादेस्तत्र भावतोऽपि |
| | | स्वाभ्यत्वे | स्वाभ्यत्वे न |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 4, | 18–9. | तत्सिद्ध | तत्सिद्धि |
| | 20. | न्यूनाधिक | न्यूनाधिकत्व |
| 5, | 6. | इतीति | इति लोक इति |
| | | शाब्द | शाब्दी |
| | 10. | तस्य यः | तस्य |
| | 11. | साक्षादित्यर्थे | साक्षादित्यर्थे 'गां बधान' इत्यादि |
| | | अगानेन | अविगानेन |
| | 13–4. | लक्षणा प्रवृत्तिः दिश्यते तमालक्ष्य | लक्षणां प्रवृत्तिमालक्ष्य |
| | 16. | त्यवतार[धार] | त्यवधार |
| 6, | 14. | मुख्या | मुख्यापि |
| | 16–7. | तदुक्तेः | तद्वृत्तेः |
| | 19. | लक्षणावकाश इत्यर्थः | लक्षणावकाशमासादयतीति युक्तं लक्षणालक्षणमित्यर्थः |
| 7, | 10. | [द्वे] . | द्वे |
| | 11. | संकरेऽपि | शङ्कितेऽपि |
| | 13. | गुणवृत्तौ | लक्षणावृत्तौ |
| | 18. | विधः[धत्वं] | धत्वं |
| | 19. | व्यायर्त्य | व्यावृत्य |
| | 20. | विवृणोति | सोदाहरणां विवृणोति |
| 8, | 10. | जहदजहल्लक्षणायां | जहल्लक्षणायां |
| | 11. | सामर्थ्य[कार्त्स्न्यं] | सामर्थ्यं |
| | 12. | अजहल्लक्षणायां | जहल्लक्षणायां |
| | | स[तस्य] | This is omitted. |
| | 13. | स्फुटयति | स्पष्टयति |
| | | व्यवभि.कं[व्यवच्छेत्तुं] | व्यवच्छेत्तुं |
| | 14. | दायेत्युक्तम् अजहल्लक्षणा | दायेत्युक्तम्–कृत्स्नमेवेति ॥ जहदजहल्लक्षणा |
| | 17. | परित्यागे | परित्यागेन |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 8, | 19. | वारयितुं तामुदा | वारयितुमुदा |
| 9, | 8. | वृत्तित्रयं | प्रवृत्तित्रयं |
| | 10. | [कुतः] | कस्मात् |
| | 14. | निष्क्रियः[ष्क्रिये क्रिया] | निष्क्रिये क्रिया |
| | 16. | [पाचकः] | पाचकः |
| | 17. | शब्दस्य वृत्तिरूपमि[रुपपद्यत] | शब्दप्रवृत्तिरुपपत्तिमती |
| 10, | 8. | प्रतीचिशब्दस्य मुख्यवृत्त्यसंभवे | प्रतीचिशब्दस्य मुख्यवृत्तेरनुपपत्तिः सिद्धेत्याह—येनेति ॥ प्रत्यगात्मनि शब्दस्य मुख्यवृत्त्यसंभवे |
| | 9. | वृत्त्यन्तरमपि | वृत्त्यनन्तरमपि |
| | 12. | इन्द्रियगोचर | इन्द्रियागोचर |
| | 13. | स्वरूपं तदनु | स्वरूपं चैतन्यं तदनु |
| | 15. | वृत्तिं | प्रवृत्तिं |
| | 16. | तत्साक्षी | शब्देन तत्साक्षी |
| | | योगादित्यर्थः | योगवदित्यर्थः |
| | 20. | कारणैवमाह[कारे कारण माह] | कारे कारणमाह |
| 11, | 6. | स्थितत्त्वंपदं | स्थितं त्वंपदं |
| | 7. | वाच्ययन[वाच्यौ यौ] | वाच्यौ यौ |
| | 8. | सद्वितीयत्वस्य | सद्वितीयत्वस्य च |
| | 12. | तद्देशकालयोश्च | तद्देशकालयोरेतद्देशकालयोश्च |
| | 13–4. | एकत्रासंभवात् | एकस्मिन्नसंभवात् |
| | 14. | न विशिष्ट | नाविशिष्ट |
| | 15. | तत्त्वमसिवाक्ये | तत्त्वमसिवाक्येऽपि |
| | 16. | जहल्लक्षणाया वा अजह | अजहल्लक्षणाया वा जह |
| 12, | 7. | यथोक्तवल्लक्षण | यथोक्तैव लक्षण |
| | 10. | इत्यत्र | इत्यत्र च |
| | 13. | कत्वा...[कभावापा]तात् | कत्वव्याघातात् |
| | 15. | एवमस्मिन्[एवमेकस्मिन्] | एकस्मिन् |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 13, | 12. | अभिसन्धत्ते | अभिधत्ते |
| | 13. | भवत्येव | संभवत्येव |
| | 15. | वृत्तित्रये | प्रवृत्तित्रये |
| | 18. | वृत्तित्रयं | प्रवृत्तित्रयं |
| | 19. | जहत्स्वार्थेति | जहत्स्वार्थाजहत्स्वार्था जहदजहत्स्वार्थेति |
| 14, | 10. | वृत्तित्रयं | प्रवृत्तित्रयं |
| | 15. | अत इति | यत इति |
| | 18. | प्रागुक्तविभाग | प्रागुक्तपक्ष |
| | 20. | वृत्तिद्वयस्य | प्रवृत्तिद्वयस्य |
| 15, | 14. | अन्तर्बहिर्भागेन | अन्तर्भागेन |
| | 16. | परिणामित्वे हि | परिणामित्वेऽपि |
| | 18. | न्यायेन कार्यत्वादि | न्यायेनाकार्यत्वादिति |
| | 22. | विकसिते | विकसिते कमले |
| 16, | 4. | तदर्थज्ञान | तदर्थ ज्ञान |
| | | सर्वज्ञात्मा | सर्वज्ञात्मा नामा |
| | 7. | नेति [जायेतेति] | नेत्स्यति |

PRAKARANA II.

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 17, | 11. | वाक्योऽर्थे [वाक्यार्थे] | वाक्योऽर्थे |
| | 13. | शुद्धत्वनीते [त्वं धुनीते] | शुद्धत्वं धुनीते |
| | 14. | विवेकानन्तरं महावाक्य- | विवेकानन्तरं महावाक्यव्याख्यानादेव "अहं ब्रह्मास्मि" इति वाक्यार्थ-ज्ञानोत्पत्तेः महावाक्य- |
| | 18. | वाक्य [वाक्यार्थ] | वाक्यार्थ |
| 18, | 7. | पदार्थेति [पदद्वयेति] | पदद्वयेति |
| | 14–17. | प्राणपिण्डेत्यादि... वाक्यार्थयोः | प्राणपिण्डेत्यादिविशेषणं च कार्यद्वारा-कारणाधिगतिः सुकरेति दर्शयितु-मित्यर्थः। कार्यशबलं प्रत्यक्चैतन्यं |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| | | | त्वंपदार्थवाच्यम्; कारणशबलमद्वितीयं चैतन्यं तत्पदवाच्यमित्युक्तम् । तर्हि कार्याभावे तदपेक्षस्य कारणस्यापि भावायोगाद्वाच्यार्थयोरागन्तुकत्वमित्याशङ्क्याह — एतदुक्तमिति ॥ वाच्यार्थवृत्तावनूद्य पदयोः सामानाधिकरण्यं पदार्थयोः |
| 19, | 12. | तत्रेति | तत्र |
| | 13. | प्रतीचः | प्रतीची |
| | 15. | लक्षणो वः | लक्षणः |
| | 16. | वाक्यादधि | वाक्याधि |
| | 17. | विशेष[षण] | विशेषण |
| 20, | 8. | प्रोच्यते | उच्यते |
| | | अथ[सत्र] | सत्र |
| | 15–6. | तत्तस्य[तत्त्वज्ञानस्य] | तस्य |
| | 17. | त्वादविरोधमिति[दित्यविरोधं] | त्वाद्विरोधात् |
| | 20. | सर्पवस्तुत्वात्म[सर्पवदवस्तुत्वादुपदेष्टृत्वं] | सर्पवदवस्तुत्वादुपदेष्टृत्वं |
| | 20–1. | सवर्ण[सर्वज्ञ] | सर्वज्ञ |
| | 22. | यथा | यथोक्त |
| 21, | 5. | चिरतरपरिचयात् | चिरतरपरिचरणपरिचयात् |
| | 10. | असंभाव[भावना] | असंभावना |
| | 16. | कयोः | तयोः |
| | | पदद्वन्द्वयोत[पदद्वयेति] | पदद्वयेति |
| | 17. | इत्यनु | इति तदनु |
| | 19. | न सर्व[नन्वस्य] | नन्वस्य |
| 22, | 10. | तदेव[तदैव] | तदैव |
| | 11. | शरीरयतो | शरीरपरतो |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 22, | 12. | वा कर्मणा | वा भावा विना कर्मणा |
| 23, | 12. | ज्ञानोदयानन्त | ज्ञानोदयान्त |
| | 13. | सिद्धयर्थं | स्तुत्यर्थं |
| | 13–4. | तापुनरितर[नरुक्त] | तापुनरुक्तत्व |
| | 8. | सजगन्मूलं | समूलं |
| 24, | 8. | पूर्णतां | पूर्णत्वं |
| | 13. | अधिकरोति | वशीकरोति |
| | 17. | तत्र | तेषां तत्र |
| | 22. | तादा[दात्म्यं तद]भावात् | तदभावात् |
| 25, | 10. | मूना | This is omitted. |
| | 14. | प्रत्युपदेशः | प्रति विद्योपदेशः |
| | 18. | अज्ञानमेव | अनुज्ञानमेव |
| 26, | 8. | तदेव | तदेवं |
| | 11. | अन्तरङ्गभगवद्भजनं | अन्तरङ्गसाधनं भगवद्भजनं |
| | 16. | परि[वरि]वस्यति | वरित्रस्यति |
| | 17. | अधिकारिणं | अधिकरणं |
| 27, | 11. | तत्त्वे कथं तस्या व्य[तस्य निषेध्य]त्वं | कृतकत्वे कथं तस्यादकव्यत्वं [!] |
| 28, | 8. | प्रत्यन्तरत्वमप | प्रत्यन्तरङ्गत्वमव |
| | 10. | पादं[वादं] | वादं |
| | | भुजङ्गादिति[भुजङ्गवदिति | भुजङ्गवदिति |
| 29, | 10. | कारण[णत्व]माह | कारणत्वमाह |
| | 18. | भूमिकां | भूतिकां |
| 30, | 14. | व्यपदेश | व्यपदेशे |
| | 15. | वस्तुनो | वस्तुतो |
| 31, | 11. | भूतव्यवहारवद्भूतद्वय | भूतत्रयव्यवहारवद्भूतद्वार |
| | 16. | शरीरजातं | शरीरजात |
| 32, | 14. | वाच्यार्थावपीत्थमुक्त्वा | वाच्यावर्थावपि तामुक्त्वा |
| 33, | 9. | एवंविध[नैवंविधत्व] | अनेवंविधत्व |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 33, | 14. | यः[सः] | This is omitted. |
| | | अवस्थायां[स्थात्रयं] | अवस्थात्रयं |
| | 15. | नु भवतीत्य[त्यर्थः । किं तदवस्थात्रयमित्य]पेक्षायां | नु भवोत्यर्थः । किं तदवस्थात्रयं यदय मविकृतोऽनुभवति इत्यपेक्षायां |
| 34, | 8. | तन्निमित्तस्वप्नादि | तन्निमित्तं स्वप्नः |
| | 14. | पटाणि[वटकाणि]कायां | वटकाणिकायां |
| | 15. | मास्वि[मास्थि]तम् | मास्थितम् |
| | | तस्य | तदा तस्य |
| | 20. | अवगम्य | आगम्य |
| | 21. | स पूर्वमेव | सर्वं पूर्वमेव |
| | 22. | अपच्छिद्य | ऽव्यवच्छिद्य |
| 35, | 16. | कार्यत्वात् | कार्यत्वात् लिङ्गस्य |
| | 18. | सत[सद्]शकस्य | सतद्शकस्य |
| | 19. | कार्यं | कार्यत्वात् |
| 36, | 12. | मायावीति | माऽप्यपीति |
| | 13. | यस्मिन् | स्वयं |
| | | मायायाः | माया |
| | 14. | निवर्त्यस्य | विवर्तं |
| | | सूक्ष्म | स्थूलसूक्ष्म |
| | 19. | करसं | करस्थं |
| | | कुर्वती तमः | कुर्वतो मोक्षः |
| 37, | 9. | भ्रमश्च[मस्य] | भ्रमस्य |
| 38, | 8. | ऽव्याख्यायाप[यावान्त]र | ऽव्याख्यायावान्तर |
| | 9. | परापर[परदेवतारूप]गुरुं | परगुरुं |
| | 15. | वाक्यस्य नार्थो | वाक्यस्य |
| 39, | 8. | दमादिसा[साधनसंप]न्मुमुक्षु | दमादिसंपन्मुमुक्षु |
| 40, | 11. | अवान्तरवाक्यार्थयोर्मध्ये तत्पदार्थविषयमवतार्य | अवान्तरवाक्यमवतार्य |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 45, | 15. | संघाप्रवृ...पृथक् [संघा- तात् प्रवृहेत् पृथक्] कुर्यात् | संघातादिरित्यर्थः । प्रवृहेत् उद्यच्छेत् पृथक् कुर्यात् |
| | 18. | ऐतरेय | ऐतरेयक |
| | | कथन | कथनस्य |
| 45, | 18. | तात्पर्यमुक्तमुपसंहरति— तस्येति ॥ | A fairly long passage is omitted here as indicated in the second footnote on page 45. The passage runs as follows:— तात्पर्यं त्वंपदार्थनिरूपणद्वारा कथयति— तथेत्यादिना ॥ अवस्थात्रयसाक्षित्वात् तद्वैलक्षण्यमसंगत्वात् तत्संबन्धराहित्यात् भेदस्याप्रामाणिकत्वात् त्रिविधदेहभेदस्थितस्य आत्मपदार्थस्यैकत्वम् । आत्मनोऽवस्थात्रयंव्यतिरेके हेत्वन्तरमाह—अवस्थात्रयस्येति ॥ अव्यभिचारिणो व्यभिचारिणः सकाशादतिरिक्तत्वमतिविशदमिति शेषः । किं चावस्थात्रयस्याव्यभिचारित्वाद् दण्डसर्पादिवन्मिथ्यैत्यनुमानान्न तेनात्मनो वस्तुतः संबन्धोऽस्ति इत्याह—व्यभिचारिणां चेति ॥ किं चाव्यभिचारित्वादात्मनो रज्जिवदमंशवदेव सत्यत्वानुमानान्न तस्य परमार्थतोऽवस्थात्रयेण संगतिरित्याह—अव्यभिचारिणश्चेति ॥ ऐतरेकश्रु[रेयकश्रुति]गतावस्थात्रयकथनतात्पर्यमुपसंहरति—इति तस्येति ॥ |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 46, | 10. | महावाक्यशेष | तच्छेष |
| | 15–6. | शेषिभूतमिष्यते तदा शेषिणि फलाभावात् तच्छेषेऽपि तदसिद्धेः वाक्यत्वेऽपि[महावाक्येऽपि] | शेषित्वेऽपि |
| | 18. | मीमांसा | मीमांसक |
| 47, | 11. | अंशस्य परित्यागेन | अंशपरित्यागेन |
| | | सत्यज्ञानात्मक | सत्यज्ञानानन्दात्मक |
| | 16. | परित्यागेन | परित्यागे |
| | 18. | लक्षणां | न लक्षणां |
| 48, | 11. | भाव [वात्] | भावात् |
| | | व्यतिरेके [व्यतिहारे] | व्यतिहारे |
| | 13. | निकृष्टः [निष्कृष्टः] | निष्कृष्टः |
| | | सप्रत्यगात्मा | सन् प्रत्यगात्मा |
| | 14. | तिरेको[रिक्तो] | तिरिक्तो |
| 49, | 10. | अवतार्य | अवतारयन् |
| | 11. | वाच्यत्वेन[त्वं तेन] | वाच्यं तेन |
| | 12. | भेदत्वेन[दः तेन] | भेदस्तेन |
| 50, | 7. | सूचयति। | सूचयति—स्वाभाविकेति ॥ |
| | 11. | शुद्धस्यैव | शुद्धस्यैवं |
| | 13–4. | न चाभास.. सेति। | न चाभासावाप्त्या विद्यमानाविद्यकार्यांय पर्यासेति। |
| | 17. | तिविषयं तं [वसुधान्तं] | विषयान्तं |
| 51, | 9. | संघातमन्तरेण | संघातसंबन्धमन्तरेण |
| | 12. | प्रच[सं]बन्धः | प्रतीचः संबन्धः |
| | 13. | तैस्सह | तैः |
| | 14. | कार्यकरण | कार्यकारण |
| | 19. | विद्याक्रमीश्वरत्वादित्यत्र | विद्यमानाक्रमीश्वरत्वादीत्यत्र |

| P. | L. | Printed | Ms. |
|---|---|---|---|
| 51, | 19–52, 9. | तस्य ईश्वरस्येति त.. [अस्य ईश्वरस्य। ईशित-व्ये]नार्थेन | तस्य ईश्वरस्य। ईशितव्येनार्थेन |
| 52, | 14. | ततो विश्लेषः | विश्लेषः |
| | 16. | अमृतत्वं तं | अमृतं |
| | | वैधुर्यं यात] | वैधुर्यात् |
| | 17. | मरणधर्मकं | मरणादिधर्मकं |
| | 18. | आश्रयत्व त्वा योगात् | आश्रयत्वायोगात् |
| 53, | 11. | प्रत्यग्रूपेणैवेत्युप[णत्येव] | प्रत्यग्रूपेणैवेत्येव |
| | 15. | इत्यादिश्रुतिः | इत्याद्या श्रुतिः |
| | | "बुद्धिमनाम [मसि"इ] त्याद्या | "बुद्धेर्बुद्धिमतामसि" इत्याद्या |
| 54, | 9. | तत्र | तस्य |
| | 10. | चैतन्यस्यैव | चैतन्यस्यैव तदाश्रयत्वात्तस्यैव |
| | 11. | तदभावात् | तदा भावात् |
| 11, | 12. | कालादिना [लीनः] | कालीना |
| | 12. | पुनरर्थानुपपत्तिः | पुनरुत्थानानुपपत्तिः |
| | 14. | अथाज्जीवस्य[अयत्वं जीवस्य] | अयत्वं जीवस्य |
| | 16 | कथापि | कथा कयापि |
| 55, | 9. | [न चैतदिति ॥] | न चेति ॥ |
| | 13. | सौषुप्तज्ञान | सौषुप्ताज्ञान |
| | 20. | वाङ्मानमज्ञातं [वाङ्मज्ञातं] | वाङ्मज्ञातं |
| 56, | 10. | स्वरूपभूतानुभूति | स्वरूपभूति |
| | 12. | कारिणं[करणं] | करणं |
| | 14. | वैशिष्ट[ष्ट्य]स्यापि | वैशिष्टयस्यापि |

# INDEX OF CITATIONS







P—12

---

## ERRATA

---

| Page | Line | Read |
|---|---|---|
| 13 | 13 | अभिदधाति |
| 21 | 11 | अतत्परत्व |
| 21 | 16 | तयोरेकत्वं |
| 30 | 5 | मनो बुद्धिश्च |
| 37 | 3 | न्यस्तामलकवत् |
| 40 | 19 | न परिच्छिन्नं |
| 51 | 17 | ईश्वरत्वादिवितथं |

---



Ananda Press, Madras.